# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२१ वर्षे १ अङ्कः

संवत् २०२३

प्रकाशनतिथिः

शुद्धश्रावणामावस्या, संवत् २०२३

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

श्रीबलदेव उपाध्यायः, साहित्याचार्यः, एम० ए०

सहायकसम्पादकः

व्रजवल्लभद्विवेदो दर्शनाचार्यः




२१ वर्षे १ अङ्कः

# विषयानुक्रमणिका



## ग्रन्थसमालोचनम्



## सम्पादकीयम्

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२१ वर्षः } ज्येष्ठपूर्णिमा, संवत् २०२३ { १ अङ्कः

# भारतीयमुद्रास्वभिलेखेषु च लक्ष्मीः श्रीश्च

डा० रायगोविन्दचन्द्रः, सम्मानितकोषाध्यक्षः, वा० सं० वि० वि०, वाराणसी ।

एवमनुमीयते यदीशातः पूर्वं द्वितीयशताब्दीपर्यन्तं जनसाधारणेषु धारणेयं सुस्थिता आसीत्, यल्लक्ष्मीरेव सौभाग्यप्रदात्री देवी वर्तते। अतोऽस्याः पूजा स्वाभाविकी बभूव। प्रत्ययश्चैवमासीद् यद् राज्ञ ऐश्वर्यस्य प्रतीकमपि तस्मिन् काले लक्ष्मीरेव स्वीकृता। अतो हेतोस्तदा मुद्राणामुपरि लक्ष्म्या मूर्तेरपि निर्माणं प्रारब्धम्। एवं विश्वस्यते यद् राजानः स्वकीये राज्यकोषे राज्यलक्ष्म्याः सुरक्षायै स्वकीयासु मुद्रासु तस्या मूर्तेश्चिह्नमङ्कितवन्तः, यतो हि जनसाधारणस्य विश्वासानुसारं राज्यलक्ष्मीः स्वभावतश्चञ्चला वर्तते।

एतादृश्यः सर्वप्राचीनमुद्रा यत्र राजलक्ष्म्या मूर्तिरङ्किताऽस्ति, उज्जयिन्यामुपलब्धाः। एतासु मुद्रास्वेकस्मिन् पार्श्वे सूर्याङ्कितं ध्वजं गृहीत्वाऽङ्कितः पुरुषो दृश्यते। अपरस्मिन् पार्श्वे च पद्मस्योपरि स्थिताया गजलक्ष्म्या मूर्तिरङ्किताऽस्ति। मुद्रायामङ्कितायाश्च मूर्तेरेकस्मिन् हस्ते पद्मं शोभते। ताम्रैर्निर्मिताश्च ता मुद्राः प्राय

ईशातः पूर्वं प्रथमशताब्द्या द्वितीयशताब्द्या वा सन्ति[१]। कौशाम्बीतोऽप्येतादृशी मुद्रोपलब्धा, यत्र कस्यापि राज्ञो नामाङ्कितं नास्ति, किन्तु तस्याः पृष्ठभागे गजलक्ष्म्या मूर्तिः स्थिता दृश्यते[२]। प्रायस्तत्सदृश्येव पाञ्चालराजस्याग्निमित्रस्य भद्रघोषस्य च मुद्रा वर्तते, सा प्राय ईशातः पूर्वं प्रथमशताब्द्या द्वितीयशताब्द्या वा भवेत्। अत्रापि लक्ष्म्या मूर्तिरङ्किताऽस्ति[३]। पाञ्चालराजस्य फाल्गुनीमित्रस्य ताम्रनिर्मितमुद्राणामुपर्येकस्मिन् पार्श्वे लक्ष्मीदेव्या मूर्तिरङ्किताऽस्ति। सा च मूर्तिर्विकसितकमलपुष्पस्योपरि स्थिता वर्तते। तस्याश्च मूर्तेरेको बाहुः कट्यामपरश्चोर्ध्वं स्थितोऽस्ति। उत्थिते च दक्षिणबाहौ कमलं विद्यते। अस्याश्च मूर्तेः शिरसि व्यजनानां मुकुटो वर्तते, कर्णयोश्च गोलाकारे कुण्डले शोभेते। उत्तरीयं स्कन्धभागतः पादपर्यन्तं लम्बमानं दृश्यते। अन्यानि वस्त्राणि स्पष्टं न प्रतिभान्ति। अस्या मूर्तेर्दक्षिणभागे वज्राकारमेकं चिह्नं दृश्यते[४]। अस्या देव्या मुकुटे स्यूतं व्यजनचिह्नमिदं सूचयति यदस्याः सम्पर्को जनजातीयैः सह आसीत्। अस्या मुद्रायाः समयः प्राय ईशातः पूर्वं प्रथमशताब्दीतो द्वितीयशताब्दीपर्यन्तं भवेत्। अयोध्याधिपतेर्विशाखदेवस्य, शिवदत्तस्य, वायुदेवस्य च मुद्राणामुपरि गजलक्ष्म्या मूर्तिः प्राप्यते। एताश्च मुद्रा ईशातः पूर्वं प्रथमशताब्द्या द्वितीयशताब्द्या वा भविष्यन्ति[५]।

भारतीयैर्ग्रीकराजभिर्भारते प्रचालितासु मुद्रासु 'पण्टालिओन'नृपतेः 'अगाथाक्लीज'नृपतेश्च मुद्रासु नृत्यन्ती काचन नारीमूर्तिर्वर्तते। सा च मूर्तिः

---

१. डा० मोतीचन्द्र —आवर लेडी आफ ब्युटी एण्ड अबण्डन्स—पद्मश्री नेहरू अभिनन्दन ग्रन्थ—पृष्ठ ५०५; विंसेण्ट स्मिथ–कैटलाग आफ दी क्वायन्स इन दी इण्डियन म्यूजियम—खण्ड १, पृष्ठ १५३ संख्या १९, २०।

२. जे० एन० वैनर्जी—डेवलपमेण्ट आफ हिन्दू आइकोनोग्राफी–पृष्ठ ११०।

३. डा० मोतीचन्द्र—पूर्ववत्–पृष्ठ ५०५; कैटलाग आफ दी क्वायन्स इन दी इण्डियन म्यूजियम–पृष्ठ १८६-१८७।

४. सी० जे० ब्राउन—दी क्वायन्स आफ इण्डिया– दी हेरिटेज आफ इण्डिया सीरीज– प्लेट १०, संख्या ४।

५. विंसेण्ट स्मिथ—कैटलाग आफ दी क्वायन्स इन दी इण्डियन म्युजियम–पृ०१४८,१४९।

कुमारस्वामिना लक्ष्म्या मूर्तिः स्वीकृता[१]। अस्या मूर्तेर्वेशो भूषणानि च यूनानीयानामङ्गनानां सदृशानि वर्तन्ते। तेनेदं सूचितं भवति यदस्या मूर्तेर्निर्माणं यूनानदेशीयैः शिल्पिभिः कृतं भवेत्[२]। शकदेशीयैस्तथा भारत-परथियनदेशाधिपतिभिश्च प्रचालितानाम् 'अजेज'मुद्राणामुपरि लक्ष्म्या मूर्तिः प्राप्यते। अत्रापि लक्ष्मीरेकस्मिन् हस्ते कमलं गृहीत्वा स्थिता दृश्यते[३]। एवमेव 'अभिलिषर' ( अजिलिसेज )नाम्नो राज्ञो मुद्रासु गजलक्ष्म्या मूर्तिः प्राप्यते[४]। अनेन राज्ञा दशविधा रजतमुद्राः प्रचालिता आसन्, तासु षष्ठप्रकारिकाया मुद्राया उपर्येकस्मिन् पार्श्वेऽश्वारूढस्य राज्ञो मूर्तिर्वर्तते, अपरभागे चोत्थिताया लक्ष्म्या मूर्तिर्निर्मिताऽस्ति[५]। अत्र सम्मुखानना देवी विकसितकमलपुष्पस्योपरि स्थिता दर्शिता। अस्या एको बाहुर्वक्षस्थले, द्वितीयश्च बाहुर्वामभागे लम्बमानो वर्तते। शिरसि मुकुटं विराजते, कर्णयोश्च कुण्डले शोभेते। अधोभागे धौतवस्त्रं वर्तते, यस्य कोणद्वयं शरीरस्योभयतः पार्श्वयोर्दृश्यते। पादौ नूपुरेणालङ्कृतौ। अन्येषां वस्त्राणां भूषणानां च चिह्नानि मुद्रायाः प्राचीनतया घृष्टतया च विलीनानि स्पष्टं न प्रतिभान्ति। कमलपुष्पस्य समीपे कमलनालद्वयं निःसरद् दृश्यते। अस्योपरि प्रफुल्लं कमलद्वयं वर्तते, यत्र विराजमानौ हस्तिनौ लम्बग्रीवाकपात्रधारिणौ लक्ष्म्या अभिषेकं कुर्वाणौ विद्येते। एवमेव कुणिन्दुमहाराजस्यामोघभूतेर्मुद्रायां लक्ष्म्या उत्थिता मूर्तिर्दृश्यते। अत्र लक्ष्मीरेकस्मिन् हस्ते पद्मं गृहीत्वा स्थिता वर्तते। अस्या दक्षिणभागे एको मृगो निर्मितोऽस्ति। अस्यां मुद्रायां खरोष्ट्रीलिप्याम् 'अभध भुतस महरजस कुणदस' इति लिखितमस्ति। अस्यां च मुद्रायां लक्ष्म्याः पादौ तस्या उत्तरीयं च स्पष्टं दृश्यन्ते[६]। एवमेवैकस्या-

---

१. डा० मोतीचन्द्र—पूर्ववत्-पृष्ठ ५०५।

२. आर० वी० ह्वाइट हेड—कैटलाग आफ क्वायन्स इन दी पंजाब म्यूजियम. लाहौर, खण्ड १, पृष्ठ १६, प्लेट २, संख्या ६५ तथा विंसेण्ट स्मिथ– क्वायन्स इन दी इण्डियन म्युजियम–प्लेट २, २।

३. आर० वी० ह्वाइट हेड-पूर्ववत्—पृष्ठ १२०, प्लेट १२, संख्या ३०८।

४. आर० वी० ह्वाइट हेड-पूर्ववत्—खण्ड १, पृष्ठ ३३२-३३३, प्लेट १३, संख्या ३३२, ३३३।

५. राखालदास बैनर्जी-प्राचीन मुद्रा—नागरी प्रचारिणी सभा—संवत् १९८१, पृष्ठ ९०-९१।

६. विंसेण्ट स्मिथ—पूर्ववत्—प्लेट २०, संख्या ११, १२।

मन्यस्यां मुद्रायां वलययुग्मं परिदधाना कमलस्योपरि स्थिता लक्ष्म्या मूर्तिर्दृश्यते। राजन्यजनपदस्य मुद्रायामपि लक्ष्म्या मूर्तिः प्राप्यते[१]।

मथुरातः प्राप्तासु सूर्यमित्र-विष्णुमित्र-पुरुषदत्त-उत्तमदत्त-बलभूति-रामदत्तानां तथा कामदत्तस्य च मुद्रासु लक्ष्याः प्रतिकृतिरुपलभ्यते[२]।

एवमेव मथुरात उपलब्धायां राजकुलपुत्रस्य सोडाशस्य ताम्रमय्यां मुद्रायां गजलक्ष्मीरङ्किता वर्तते। एषा च प्राय ईशातः पूर्वं ११० वर्षप्राचीना वर्तते[3]। मुद्राया एकस्मिन् पार्श्वे देव्याः प्रतिकृतिः, अपरे च भागे गजलक्ष्म्या उत्थिता मूर्तिरङ्किताऽस्ति। अत्र लक्ष्म्या दक्षिणो बाहुरूर्ध्वमुत्थितो वर्तते, वामश्च बाहुः पार्श्वे लम्बमानो विद्यते। उभयोः पार्श्वयोः कमलपुष्पस्योपरि स्थितौ हस्तिनौ लक्ष्मीं स्नपयतः। लक्ष्मीरेकं लघ्वाकारमन्तरीयं परिधाय स्थिता वर्तते। कर्णयोः कुण्डले विद्येते। मुद्राया घृष्टतयाऽन्यान्याभूषणानि वस्त्राणि च न सम्यक् प्रतिभान्ति। इयं च मुद्रा ताम्रमयी विद्यते। देवी च तस्यां मुद्रायां पादयोः पार्ष्णिद्वयमेकत्रीकृत्य प्रपदं च विस्तार्य स्थिता दृश्यते।

योधेयस्य राज्ञः स्वामिनो ब्रह्मण्यदेवस्य मुद्रासु पृष्ठभागेऽभिमुखं स्थिताया लक्ष्म्या मूर्तिरुपलभ्यते, एताश्च मुद्राः प्राय ईशातः पूर्वं प्रथमशताब्द्या अभिमताः। इयं मूर्तिः पद्मस्योरि स्थिता। अस्याश्चैको बाहुरूर्ध्वमुत्थितो वर्तते, वामे च हस्ते कमलं विद्यते। स च कट्या उपरि स्थितोऽस्ति। अस्याश्च देव्या वामभागे कल्पवृक्षोऽस्ति, दक्षिणे च मेरुपर्वतः। कर्णयोर्गोलाकारे कुण्डले तथा पादयोर्नूपुराणि स्पष्टानि सन्ति। अन्यानि चाभूषणानि स्पष्टं न प्रतीयन्ते। शिरसि पक्षाणां मुकुटो वर्तते[४]। ईदृश्य एव काश्चन मुद्रा अन्या अपि प्राप्यन्ते, यासु 'योधेय' इति लिखितमस्ति[५]। आसु चैकस्मिन् पार्श्वे ध्वजधारिणी मूर्तिरङ्किता,

---

१. विंसेण्ट स्मिथ—पूर्ववत्—प्लेट २१, संख्या ११।

२. डा० मोतीचन्द्र—पूर्ववत्—पृष्ठ ५०५।

३. विंसेण्ट स्मिथ—कैटलाग आफ क्वायन्स इन दी इण्डियन म्युजियम, कलकत्ता—पृष्ठ १९६-१९७, प्लेट २२, संख्या १३।

४. विंसेण्ट स्मिथ— पूर्ववत् — पृष्ठ १८१, प्लेट २१, संख्या १५।

५. विंसेण्ट स्मिथ—पूर्ववत्— प्लेट २१, संख्या १८-२०।

परस्मिन् भागे च लक्ष्म्या दक्षिणामुखी मूर्तिरङ्किता विद्यते। अस्याः समक्षं पूर्णो घटोऽङ्कितोऽस्ति, पृष्ठे च श्रीवत्सस्य चिह्नमस्ति।

सिंहलस्याधिपतयस्तस्मिन्नेव काले काश्चन विशिष्टा मुद्रा कारितवन्तः। तासु मुद्रास्वेकस्मिन् पार्श्वे लक्ष्म्या मूर्तिर्विद्यते। इयं च लक्ष्मीरुत्थिताऽस्ति। उभयोः पार्श्वयोः स्थितौ हस्तिनावेनां स्नपयतः[१]। आन्ध्रराज्यवंशीयस्य गौतमीपुत्रस्य राज्ञो यज्ञश्रीशातकर्णेस्त्रपुमयीनां मुद्राणामुपर्येकस्मिन् पार्श्वे उत्थितस्य हस्तिनो मूर्तिः प्राप्यते, परस्मिन् भागे चोत्थिता लक्ष्मीरङ्किता वर्तते। अस्या देव्या उभयतः काष्ठमण्डपं ( कटघरा ) निर्मितं वर्तते। अस्याश्च द्वयोर्हस्तयोः कमलदण्डौ वर्तेते, तत्र प्रफुल्लितयोः पुष्पयोर्हस्तिनौ स्थितौ स्तः। काष्ठमण्डपत एवं प्रतीयते यद् देवीं मन्दिरे प्रतिष्ठापयितुं प्रयत्नोऽयं विद्यते। इयं च मुद्रा प्राय ईशवीयद्वितीय-शताब्द्या भवेत्[२]।

कुषाणकालिकानां कनिष्कस्य हुविष्कस्य च मुद्राणामपरस्मिन् पार्श्वे 'आरडोक्षसो' इत्यस्य उत्थिता मूर्तिरुपलभ्यते, किन्तु वसोर्वसुदेवस्य वा मुद्रासु सिंहासने स्थिता 'आरडोक्षसो'मूर्तिरुपलभ्यते। स्थितायाश्चास्या मूर्तेर्दक्षिणहस्ते पाशः, वामहस्ते च धान्यकलमानां यूथो वर्तते। अनुमानत एवं प्रतीयते यद् वासुदेवस्य कालं यावद् 'आरडोक्षो' अथवा 'आरडोक्षसो'देव्या भारतीयत्वं तथा लक्ष्म्याः स्वरूपत्वं प्राप्तमासीत्। वसुदेवस्य मुद्रासु देवी अधोभागे धौतवस्त्रं परिधाय स्थिता, उपरिभागे च तस्याः कञ्चुलिका वर्तते। मस्तके केशविन्यासोऽपि भारतीय एव। केशपाशश्चैकेन बन्धनेन परिवेष्टितो विद्यते। ग्रीवायां बाह्वोश्च भूषणानि विद्यमानानि दृश्यन्ते[३]। केदारस्य कुषाणस्य च विशिष्टासु मुद्रासु या लक्ष्म्या मूर्तिर्दृश्यते, तस्या हस्ते कमलस्य पुष्पं विद्यते तथा च सा सिंहासने संस्थिताऽस्ति। केषाञ्चिद् विदुषां मतेन 'आरडोक्षसो'देव्या रूपान्तरमेव लक्ष्मीरूपेण वयं गुप्त-

१. ए० कुमारस्वामी—अर्ली इण्डियन आइकोनोग्राफी—श्रीलक्ष्मी—ईस्टर्न आर्ट खण्ड १, प्लेट २०।

२. विंसेण्ट स्मिथ—पूर्ववत्, पृष्ठ २१२, प्लेट २३, संख्या २१।

३. आर० वी० ह्वाइट हेड—कैटलाग आफ क्वायन्स इन दी पंजाब म्युजियम, लाहौर आक्सफोर्ड प्रेस १९१४—प्लेट १९, संख्या २३६, २३७।

कालिकासु मुद्रासु पश्यामः।[1] गुप्तसाम्राज्यस्य लक्ष्यत्रयमेव मुख्यमासीत्। यथा—राज्ञो विजित्य साम्राज्यस्य सङ्घटनम्, व्यापारेण धनार्जनम्, सौन्दर्यस्य पूजा च। अस्य लक्ष्यत्रयस्य प्राप्तिश्च लक्ष्मीसमायत्तैव। अतो हेतोस्तस्मिन् काले विशेषतो गुप्तराज्ञां मुद्रासु लक्ष्म्या देव्या अङ्कनं स्वाभाविकमासीत्। प्रथमस्य चन्द्रगुप्तस्य मुद्रास्वेकस्मिन् पार्श्वे चन्द्रगुप्तस्य कुमारदेव्याश्च मूर्तिरङ्किता, अपर-पार्श्वे च सिंहस्योपरि स्थिताया लक्ष्म्या मूर्तिर्दृश्यते।[2] अस्या देव्या एकस्मिन् हस्ते पाशः, द्वितीये च हस्ते कमलदण्डसहितो बीजकोशो वर्तते, यथा हि वासुदेवस्य मुद्रास्वङ्किताया लक्ष्म्या हस्ते दृश्यते।[3] इयं च स्कन्धयोरुत्तरीयं परिदधाना, अधोभागे धौतवस्त्रमुपरिभागे च कूर्पासकं परिधाय स्थिताऽस्ति। अस्या ग्रीवायां मुक्तादाम शोभते। हस्तयोः कङ्कणम्, पादयोर्नूपुरम्, कर्णयोश्च कुण्डलं शोभते। अस्याः पादौ कमलपुष्पस्योपरि वर्तते।[4] कनिष्कस्य मुद्रास्वप्येतादृश्येव देव्या मूर्तिर्दृश्यते।

समुद्रगुप्तस्य पराक्रमेण सम्बद्धानां मुद्राणां पृष्ठभागे स्थिता लक्ष्मीः सिंहासन उपविष्टा पादौ चाधो लम्बयन्ती दृश्यते[5]। अस्या एकस्मिन् हस्ते पाशो द्वितीये च नालदण्डसहितो बीजकोशो वर्तते। अस्याः पादौ च प्रफुल्लितकमलपुष्पस्योपरि विद्येते। अस्या उपरिभागे कञ्चुलिका, स्कन्धयोरुत्तरीयम्, अधोभागे च धौतवस्त्रं वर्तते। कुषाणस्य या 'आरडोक्षो' देवी वर्तते, तत एषा भिन्ना वर्तते। यतो ह्यस्याः पादौ कमलस्योपरि स्थितौ, ग्रीवायामेकावली, कर्णयोः कुण्डले, हस्ते च कङ्कणं वर्तते। कट्यां स्थिता मेखला न सम्यग् लक्ष्यते। पादौ नूपुरेण शोभमानौ, मस्तके स्थितो विन्दुर्मुक्ताविन्दुनालङ्कृतो विद्यते। अस्या वामो बाहुः कट्यां दक्षिणश्च

---

१. जे० आलन—कैटलाग आफ दी क्वायन्स आफ दी गुप्त डाइनेस्टीज एण्ड आफ ससाङ्क, किंग आफ गौड़–ब्रिटिश म्युजियम–१९१४–पृष्ठ २८ प्रस्तावना; अल्तेकर–कारपस आफ इण्डियन क्वायन्स–दी क्वायनेज आफ दी गुप्ता इम्पायर–पृष्ठ १५।

२. राखाल दास बैनर्जी—प्राचीन मुद्रा–पृष्ठ १५३; आलेन–पूर्ववत्–प्लेट ३, संख्या ६।

३. ह्वाइट हेड—पूर्ववत्–प्लेट १९, संख्या २३६।

४. अल्तेकर—कारपस–प्लेट १, संख्या ७।

५. राखालदास बैनर्जी—पूर्ववत्–पृष्ठ १५८; आलेन–कैटलाग–प्लेट २, सं० ३।

बाहुः किञ्चिदिवोत्थितोऽस्ति। कट्यां स्थितश्च बाहुः कमलदण्डसहितं बीजकोशं धारयति। वीणां वादयतः समुद्रगुप्तस्य मुद्रासु स्थिता लक्ष्मीरेकस्मिन् सिंहासने तिर्यक् स्थितोपलभ्यते[१]। वस्त्राभूषणं पूर्वोक्तमेव। समुद्रगुप्तस्य 'काचा'ग्रामोपलब्धासु मुद्रासु लक्ष्म्या मूर्तिरुत्थिता विद्यते। अस्या वामे हस्ते बीजकोशो दक्षिणे च पद्मपुष्पं वर्तते[२]। इयमपि कमलोपरि स्थिता दृश्यते। इतः पूर्वकालिकासु मुद्रासु प्रायो यत्र लक्ष्मीरङ्किता वर्तते, सा सर्वत्रैवोपविष्टा दृश्यते। द्वितीयस्य चन्द्रगुप्तस्य प्राचीनतमासु धनुर्धारिमुद्रासु लक्ष्मीस्तथैवाङ्किता विद्यते, यथा समुद्रगुप्तस्य ध्वजधारिमुद्रासु। परन्तु द्वितीयस्य चन्द्रगुप्तस्य सिंहासनारूढमुद्रासु पृष्ठभागे निर्मिताया लक्ष्म्या मूर्तेः, समुद्रगुप्तस्य मुद्रासु निर्मिताया लक्ष्म्या मूर्तेश्चैतावान् विशेषो यदस्या हस्तौ उपर्युत्थितौ स्तः।[३] एवमेवैका धनुरङ्किता मुद्रा वर्तते। पश्चात्कालिकासु द्वितीयस्य चन्द्रगुप्तस्य धनुरङ्कितासु मुद्रास्वियमभिमुखं पद्मोपरि योगासनमधिष्ठाय स्थिता दर्शिताऽस्ति। अस्या देव्या बाहुद्वयमुभयतः प्रसृतं वर्तते। अस्याश्चैकस्मिन् हस्ते कमलं द्वितीये च पाशो विद्यते। हस्ते स्थितस्य पाशस्याभिप्रायो वक्तुं न शक्यते। अस्या मस्तके विन्दुः, कर्णे च कुण्डलम्, बाहुद्वये चाङ्गदं शोभते। मणिवन्धो वलयेन विराजते, ग्रीवायामेकावली विद्यते। कट्यां मेखला, पादौ च नूपुरैः शोभेते। वक्षस्थले चोलिका विद्यते। स्कन्धयोरुत्तरीयम्, अधोभागे च धौतवस्त्रं विद्यते। एतादृशीसु मुद्रासु लक्ष्म्याः पुराणेषु वर्णितं रूपमुपलभ्यते। एतासामुपवेशनप्रकारश्च भारतीयः संजायते। [४]एवमेव धनुर्धारिमुद्रासु देव्या वामो बाहुर्जङ्घायां स्थितः प्रदृश्यते, किन्तु दक्षिणो बाहुः प्रसृतो वर्तते।[५] दक्षिणे हस्ते पाशो वामे हस्ते च कमलजालं वर्तते, यस्मिन् पुष्पं विकसदिव लक्ष्यते। यस्मिन् कमले लक्ष्मीः स्थिता तत् सप्तदलयुक्तं वर्तते।

---

१. आलेन—कैटलाग—प्लेट ५–६।

२. आलेन—कैटलाग—प्लेट २–९।

३. जे० आलेन—पूर्ववत्—प्लेट ६ संख्या ८, ९।

४. जे० आलेन—पूर्ववत्—प्लेट ६ संख्या १०, १२-१६ इत्यादि।

५. जे० आलेन—पूर्ववत्—प्लेट ७ संख्या १–४, ६–१९।

छत्रधारिणो द्वितीयस्य चन्द्रगुप्तस्य मुद्राणां पृष्ठभागे उत्थिताया लक्ष्म्या मूर्तिरङ्किता विद्यते। कस्याञ्चिद् मुद्रायां लक्ष्मीः समक्षं मुखं कृत्वा स्थिता विद्यते, अन्यासु तिर्यग्भूता दृश्यते[१]। वस्त्रमाभूषणं चोभयत्र तुल्यमेव, परन्तु समक्षं मुखं कृत्वा स्थिताया लक्ष्म्या मस्तके मुकुटं दृश्यते। द्वितीयस्य चन्द्रगुप्तस्य सिंह-वधमुद्रासु लक्ष्म्या मूर्तिः सिंहारूढा दर्शिताऽस्ति। क्वचिदेषा सुखासने सिंहारूढा [२]दर्शिता, क्वचिच्च[३] योगासनारूढा। कासुचन मुद्रासु लक्ष्मीः पादद्वयमधः कृत्वा सिंहमारूढा दर्शिता विद्यते। कस्याञ्चिच्च मुद्रायां सिंहेऽश्वारोहवदेषा दर्शिता वर्तते। एतासु मूर्तिषु सर्वासां शिर एकवेणीविशिष्टं विद्यते। द्वितीयस्याश्वारूढस्य चन्द्रगुप्तस्य मुद्रायाः पृष्ठभागे एकस्यामासन्द्यां स्थिता देव्या मूर्तिर्दर्शिता वर्तते। वस्त्रमाभूषणं च पूर्वोक्तमेव। चन्द्रगुप्तस्य चक्रविक्रमनामकमुद्राया उपरि विकसित-कमलासनारूढा समक्षं मुखं कृत्वा लक्ष्मीरुत्थिता दृश्यते[४]। अत्र लक्ष्म्या वामहस्ते कमलमस्ति। दक्षिणो दानमुद्रायामुत्थितो वर्तते। दक्षिणबाहोरधः शङ्खस्य चिह्नमङ्कितम्। कर्णयोः कुण्डले, हस्तौ च वलयेनालङ्कृतौ दृश्येते। ऊर्ध्वभागे स्थितमुत्तरीयं स्कन्धभागतः पादपर्यन्तं लम्बमानं दृश्यते। उपरिभागे कूर्पासकोऽधो-भागे च धौतवस्त्रं शोभते।

प्रथमस्य कुमारगुप्तस्य धनुरङ्कितमुद्रासु लक्ष्मीः सप्तदलयुक्तकमलपुष्पस्योपरि स्थिता, अस्याश्चोत्थिते वामहस्ते पाशो वर्तते। दक्षिणबाहुश्च जङ्घाया उपरि विद्यते, तस्मिंश्च हस्ते कमलनालं विराजते, अस्यां मुद्रायां लक्ष्मीः सुखासने स्थिता वर्तते[५]। अस्य राज्ञः कासुचिद् मुद्रासु लक्ष्म्या वामबाहुरप्यूर्ध्वमुत्थितोऽस्ति[६]। अश्वारोह-चिह्नितमुद्राणां पृष्ठभागे लक्ष्मीरेकस्यामासन्द्यां स्थिता मयूराय भोजनं च ददती

---

१ जे० आलेन—पूर्ववत्—प्लेट ८ संख्या ५ तथा ९।

२. जे० आलेन—पूर्ववत्—प्लेट ९ संख्या ५, ८, ९,।

३. जे० आलेन—पूर्ववत्— प्लेट ८ संख्या १४, १५।

४. जे० आलन—पूर्ववत्—प्लेट ९ संख्या १३।

५. अल्तेकर—कारपस—प्लेट ९ संख्या ९; विष्णुधर्मोत्तरपुराणे शङ्खस्य सम्बन्धो लक्ष्म्या सहोपलभ्यते।

६. जे० आलेन—पूर्ववत्—प्लेट १२ संख्या १, ३।

दर्शिता विद्यते। अस्या वामहस्ते कमलं विद्यते[१]। सिंहमृगयाङ्कितमुद्रासु लक्ष्मीः सिंहस्योपरि स्थिता दर्शिताऽस्ति। एतासु मुद्रासु यत्र सिंहो राज्ञो वामभागेऽङ्कितोऽस्ति, तत्रैव पृष्ठभागे सिंहस्योपरि अर्धपर्यङ्कासने उपविष्टा लक्ष्मीरङ्किताऽस्ति। आसु मुद्रासु कस्याञ्चिद् लक्ष्म्या दक्षिणकरे पाशो वर्तते, कासुचिच्च देवी स्वदक्षिणकराद् मुद्राः पातयन्ती दृश्यते। एताश्च मुद्रा वर्तुलाकाराः सन्ति। सम्भवत एता गुप्तस्वर्णमुद्राणां प्रतिरूपका भवेयुः[२], परन्तु सिंहाखेटाङ्कितमुद्रासु यत्र सिंहो राज्ञो वामभागे दर्शितोऽस्ति, देवी तत्र मयूरायाहारं ददती दर्शिता वर्तते। प्रतापमुद्रास्वप्रतिघमुद्रासु वा देव्या दक्षिणे करे पद्मं विद्यते। अपि चेयं देवी कमलपुष्पे स्थिता विद्यते। अत्रापि देव्या मस्तके एका वेणी वर्तते[३]। गजारोहमुद्रायाः पृष्ठभागे लक्ष्मीः कमलपुष्पे स्थिता दर्शिता। अस्या दक्षिणहस्ते कमलनालं विद्यते, यदधोभागस्थिताज्जलाशयात् प्रादुर्भवत् प्रदर्श्यते। अपि च वामहस्तस्याधस्तात् कमलं विद्यते। देव्याश्च वामभागे कल्पवृक्षो दृश्यते[४]। कुमारगुप्तस्य राज्ञो महिष्याश्च मुद्रायाः पृष्ठभागे देवी सिंहस्योपरि अर्धपर्यङ्कासने उपविष्टा दर्शिता, तस्या वामकरे कमलं दक्षिणे च पाशो वर्तते[५]। वीणां वादयतः कुमारगुप्तस्य मुद्रासु लक्ष्मीः सिंहासने तिर्यग् उपविष्टा। देव्या एकः पादो द्वितीयपादस्योपरि स्थितोऽस्ति। सिंहासनस्योपरि वामो बाहुः, दक्षिणे च हस्ते कमलं विद्यते। नेत्रे च देव्याः कमलसमक्षं वर्तेते। वस्त्राभूषणे च पूर्ववदेव[६]। कुमारगुप्तस्य छत्रचिह्नितमुद्राणां पृष्ठभागे लक्ष्मीर्दक्षिणहस्ते पाशं गृहीत्वा, वामहस्ते च कमलं गृहीत्वा, दक्षिणे मुखं कृत्वा स्थिता प्रदर्शिता। अस्याः कर्णे वर्तुलाकारं कुण्डलम्, ग्रीवायामेकावली, बाहुमध्ये केयूरम्, मणिबन्धे वलयम्, पादयोश्च पादवलयमवलोक्यते। वेणी च तस्याः पृष्ठभागे लम्बमाना वर्तते। मस्तके बिन्दुर्ललाटे च मुक्तादाम दृश्यते। ऊर्ध्वभागे

---

१. जे० आलन—पूर्ववत्–प्लेट १३, संख्या १३, १४।

२. जे० आलन—पूर्ववत्–प्लेट १४, संख्या १०, ११।

३. जे० आलन—पूर्ववत्–प्लेट १५, संख्या १५।

४. जे० आलन – पूर्ववत् – प्लेट १५, संख्या १६।

५. जे० आलन—पूर्ववत्– आल्तेकर – कारपस –प्लेट १४–४।

६. आल्तेकर – कारपस – प्लेट १४–५।

२

स्थितमुत्तरीयमधस्ताल्लम्बमानं वर्तते[1]। एकस्यामङ्कुतायां मुद्रायां कुमारगुप्तोऽसिना गण्डकं प्रहरन् प्रदर्शितः। अस्या मुद्रायाः पृष्ठभागे या लक्ष्म्या मूर्तिरङ्किताऽस्ति, साऽद्वितीया वर्तते। अत्र देव्याश्छत्रं धारयन् स्थित एको यक्षो विद्यते, देवीं च हस्तिशुण्डधर एको मकरः स्वीयशुण्डादण्डेन कमलमर्पयन् दृश्यते। एनां देवीं केचन विद्वांसो गङ्गां वदन्ति, परन्तु कमलसम्बद्धेयं देवी लक्ष्मीरिति कथनमधिकमुपयुक्तं भवति[2]।

स्कन्दगुप्तस्य धनुरङ्कितमुद्रासु लक्ष्मीः कमलस्योपरि स्थिता विद्यते। अस्या वामहस्ते कमलं दक्षिणहस्ते च पाशो वर्तते, भूषणादीनि तु द्वितीयचन्द्रगुप्तस्य धनुरङ्कितमुद्राणां पृष्ठभागेऽङ्किताया लक्ष्म्याः सदृशानि वर्तन्ते। इदमेकमवश्यं वैशिष्ट्यं यत् कमलस्य पत्राणामधस्तादपि तत्र कमलपत्राणां द्वितीया पङ्क्तिर्दर्शिताऽस्ति[3]। स्कन्दगुप्तस्य नृपतिराज्ञीभ्यां लक्ष्मीराजभ्यां वा[4] चिह्नितानां मुद्राणां पृष्ठभागेऽङ्किता लक्ष्मीर्धनुरङ्कितमुद्रास्वङ्कितया लक्ष्म्या नातीव भिन्ना, केवलमेतासां हस्तयोः कङ्कणानि विद्यन्ते। छत्रधारिमुद्रासु पृष्ठभागे चिह्निता लक्ष्मीर्दक्षिणे मुखं कृत्वा दर्शिता विद्यते।[5] अस्या एकस्मिन् हस्ते पाशो द्वितीये च कमलं वर्तते। वामहस्तश्चाधस्ताल्लम्बमानो विद्यते। ग्रीवायामेकावली, कर्णयोः कुण्डले, बाहौ केयूरम्, मणिबन्धे वलयम्, पादयोश्च नूपुराणि वर्तन्ते। वस्त्राणि पूर्ववत्। मस्तकस्य पृष्ठभागे मुक्ताग्रथिता वेणी लम्बमाना वर्तते। स्कन्दगुप्तस्याश्वारोहचिह्नितमुद्रायाः पृष्ठभागे लक्ष्मीरासन्द्यामुपविष्टा प्रदर्शिता।[6] अस्या दक्षिणहस्ते पाशो वामे च कमलं विद्यते। देव्या भूषणेषु ग्रीवायामेकावल्या सह एकं 'तौक'नाम्ना प्रसिद्धं ग्रीवाभूषणमप्यस्ति। अत्रैकं वैशिष्ट्यं यदधस्तात् स्थिता आसन्दी नौकासदृशी वर्तते। घटोत्कचस्यैका मुद्रा उपलब्धा विद्यते।[7] तत्र राजा धनुर्धररूपेणा-

१. आल्तेकर – कारपस – प्लेट १३–१५।

२. आल्तेकर – कारपस – प्लेट १३–४५, पृष्ठ १९८।

३, आल्तेकर – कारपस – प्लेट १४–८, ९, १०।

४. आल्तेकर – कारपस – प्लेट १४–१२, १३, पृष्ठ २४४, २४५।

५. आल्तेकर – कारपस – प्लेट १४ – १४ – पृष्ठ २४८।

६. आल्तेकर – कारपस – प्लेट १४ – १५ – पृष्ठ २४९।

७. आल्तेकर – कारपस – पृष्ठ २४८।

ङ्कितो वर्तते, पृष्ठे च कमलस्योपरि स्थिता लक्ष्मीर्दृश्यते। अस्या ग्रीवायामपि 'तौक'-नाम्ना प्रसिद्धेन ग्रीवाभूषणेन युक्ता एकावली विद्यते। बाहौ केयूरम्, कर्णयोश्च कुण्डले लम्बमाने दृश्येते। अन्यद् वस्त्राभूषणं पूर्ववत्। अद्यावधि एतादृशी एकैव मुद्रा उपलब्धा, या लेनिनग्राडनगरस्य सङ्ग्रहालये सुरक्षिता विद्यते[२]।

स्कन्दगुप्तस्योत्तराधिकारिणां मुद्राणां पृष्ठभागेऽङ्किताया लक्ष्म्या मूर्तयः प्राय एकाकारा एव सन्ति। नरसिंहगुप्तस्य, द्वितीयकुमारगुप्तस्य, बुद्धगुप्तस्य, विष्णुगुप्तस्य, विनयगुप्तस्य, प्रकाशादित्यादीनां च मुद्रासु कमलावस्थिता लक्ष्मीर्वामहस्ते कमलं दक्षिणहस्ते च पाशं धारयति। शशाङ्कस्य मुद्रासु लक्ष्मीरेकस्मिन् पादे द्वितीयं पादं धारयन्ती दर्शिता।[३] गुप्तसाम्राज्यविनाशानन्तरं या मुद्रा उपलब्धाः सन्ति, तास्वष्टभुजाया लक्ष्मीदेव्या मूर्तिरुत्थितावस्था प्रदर्शिता[४]।

काश्मीरस्य राज्ञस्तोरमानस्य षष्ठशताब्दीभवस्य मुद्रासु पृष्ठभागेऽङ्किताया लक्ष्म्या मूर्तिरुपविष्टा लभ्यते। अत्र देवी पादौ संकोच्य तिर्यगुपविष्टा विद्यते। अस्या वामहस्ते कमलदण्डो वर्तते, स्कन्धस्य समीपे पुष्पं चास्ति। अस्याः सम्मुखं चैको घटो विद्यते; कर्णयोः कुण्डलम्, हस्तयोर्मुक्तावलयम्, पादयोर्नूपुराणि च दृश्यन्ते। इयं चैकमल्पप्रमाणकमंशुकं परिदधाना वर्तते। अंशुकस्य चाधोभागे वस्त्रगुच्छा (फुन्ने) लम्बायमानाः शोभन्ते[५]। तोरमानस्य चैकस्यां मुद्रायां लक्ष्मीरेकं पादं लम्बायमानं कृत्वा द्वितीयं च किञ्चिदिव संकोच्यार्धपर्यङ्कासनमुद्रायामभि-मुखीना सिंहासने स्थिता विद्यते। वामो हस्तो जङ्घायां द्वितीयश्चोर्ध्वमुत्थितोऽस्ति। प्राय इयं प्रतिमा गुप्तमुद्रासदृशी प्रतीयते[६]।

प्रतापादित्यद्वितीयस्य, यशोवर्मणः, विनयादित्यस्य (जयापीड), विग्रहस्य

---

१. आल्तेकर – कारपस – प्लेट १४–१६।
२. आल्तेकर – कारपस – पृष्ठ २४८।
३. जे० आलन – कैटलाग – प्लेट २३, संख्या १४, १५, १६।
४. जे० आलन – कैटलाग – प्लेट २४, संख्या १७, १८, १९।
५. विंसेण्ट स्मिथ – उपरोक्त – पृष्ठ २५२, प्लेट २६, संख्या ७।
६. विंसेण्ट स्मिथ – उपरोक्त – प्लेट २७–४।

च मुद्रास्वेकस्मिन् पार्श्वे सिंहासनस्योपर्युपविष्टा लक्ष्मीप्रतिमा वर्तते। अस्यां मूर्तौ शिरो नास्ति। एताश्च मुद्रा अतीव विद्रूपाः सन्ति[१]।

प्रायो गाङ्गेयदेवस्यैकादशशताब्दीभवस्य स्वर्णमुद्रासु पृष्ठभागे लक्ष्म्या उपविष्टा मूर्तिर्लभ्यते। अस्या मूर्तेश्चत्वारो हस्ताः सन्ति। इयं च सुखासन उपविष्टा विद्यते। अस्याः शिरसि मुकुटम्, कर्णयोः कुण्डले, हस्ते च वलयानि, कट्यां मेखला, पादयोश्च पादभूषणानि सन्ति[२]। अस्या एव सदृशी मूर्तिर्बुन्देलखण्डस्य चन्देल-वंशीयस्य राज्ञो वीरवर्मदेवस्य मुद्रासु, तथा गहड़वारवंशीयस्य राज्ञो गोविन्दचन्द्रस्य मुद्रास्वप्युपलभ्यते[3]।

काश्मीरस्य नृपतीनां पार्थ-क्षेमगुप्त-अभिमन्युगुप्त-नन्दिगुप्त-त्रिभुवनगुप्त-भीमगुप्तानां 'दिद्दा'राज्ञ्याश्च, येषां राज्यकालः ९०६ ईशवीयतः १००३ ईशवीयपर्यन्तं प्राचलत्, मुद्रासु लक्ष्म्या मूर्तिरस्माभिरुपलभ्यते। राज्ञ्या दिद्दाया मुद्रासु त्वेकस्मिन् पार्श्वे 'श्री' इत्यपि लिखितमुपलभ्यते (९८०–१००३)[४]। एतासु मुद्रासु गजलक्ष्म्या मूर्तिः प्राय उपविष्टाऽस्ति। एतासु क्षेमगुप्तस्य मुद्रासु स्थिताया लक्ष्म्याश्चत्वारो हस्ताः सन्ति। मुकुटे त्रीणि पिच्छानि ( कलगी ) सन्ति, कर्णयोः कुण्डले, ग्रीवायां मूषकदन्ताकारं ग्रीवाभूषणं ( 'तौक' इति प्रसिद्धं भूषणम् ) विद्यते। अधोभागे च झल्लरी( झालर )-युक्तमन्तरीयं ( लहंगा ) वर्तते। [५]एनां लक्ष्मीं द्वौ गजौ स्नपयतः। प्राय ईदृश्यामेव वेषभूषायामन्यास्वपि मुद्रास्वियं दृश्यते। ईदृशी एव मुद्रा प्रथमलोहारवंशीयैः संग्राम-अनन्त-कलश-हर्षादिभिर्नृपैः प्रसारिता। एतेषां राज्यकालः १००३–११०१ ईशवीयं यावत् स्वीक्रियते। द्वितीयलोहारवंशजानां राज्ञां सुस्सल-जयसिंहदेव-नागदेव-प्रभृतीनां मुद्रासु, येषां राज्यकालः ११९२–१२१४ ईशवीयं यावदङ्गीकृतः, सिंहासने स्थिता लक्ष्मीः पाश्चात्त्यपद्धत्या लम्बायमानपादा दर्शिता वर्तते। एषां मध्ये नागदेवस्य

---

१. विंसेण्ट स्मिथ – उपरोक्त – प्लेट २७, संख्या ५, ६, ७, ८।

२. विंसेण्ट स्मिथ – उपरोक्त – प्लेट २७, संख्या २, ३,।

३. विंसेण्ट स्मिथ – उपरोक्त – प्लेट २६, संख्या ९ तथा १८।

४. विंसेण्ट स्मिथ – उपरोक्त – पृष्ठ २७० २७१, प्लेट २७, संख्या ९, १०, ११, १२, १३–कल्हणस्य राजतरङ्गिणी।

५. विंसेण्ट स्मिथ–कैटलाग–प्लेट २७, संख्या १०– कल्हणस्य राजतरङ्गिणी।

मुद्रास्वयं भावः स्पष्टरूपेण दर्शितोऽस्ति। अस्या मुकुटे एकं पिच्छं ( कलगी ) विद्यते, ग्रीवायां मूषकदन्ताकारं ग्रीवाभूषणं वर्तते, उभयपार्श्वतश्च गजावेनां स्नपयतः।

लङ्कादेशस्य राज्ञः पराक्रमबाहुनामकस्य ( ११५३–८६ ) समयतो भुवनैकबाहु-नामकस्य राज्ञः ( १२९६ ) समयपर्यन्तमुपलब्धा मुद्राः प्रायश्चोलदेशस्य राज्ञो राज-राजस्य मुद्रायाः सदृश्यः सन्ति। एतासु मुद्रास्वेकस्मिन् पार्श्वे राज्ञ उत्थिता मूर्तिः, अपरपार्श्वे च लक्ष्म्या मूर्तिर्वर्तते[१]। अस्या वामहस्ते कमलमस्ति। एता मूर्तयः प्रायोऽतीव विद्रूपाः सन्ति।

कान्यकुब्जाधिपतेर्जयचन्द्रस्य पराजयानन्तरं मोहम्मदविनसामनाम्ना नृप-तिना मध्यदेशे प्रचालिता मुद्रा गहड़वालनृपतीनां मुद्रासदृश्य आसन्। एताश्च स्वर्णस्यासन्। एतास्वेकस्मिन् पार्श्वे 'मोहम्मदविनसाम' इति नागरलिप्यां लिखित-मस्ति, द्वितीये पार्श्वे च लक्ष्म्या मूर्तिर्वर्तते[२]।

नेपालस्य प्राचीना मुद्रा यौधेयजातीयानां मुद्राणां सदृश्यः सन्ति। सम्भवत इमाः कुषाणवंशीया मुद्रा आधारीकृत्य निर्मिताः प्रतीयन्ते[३]। मानाङ्क-गुणाङ्क-वैश्रवण-अंशुवर्म-जिष्णुगुप्त-पशुपतिप्रभृतीनां मुद्राः प्राप्ताः सन्ति। एतासु मानाङ्कस्य मान-देवस्य वा मुद्रास्वेकस्मिन् पार्श्वे पद्मासनाया लक्ष्म्या मूर्तिरुपलभ्यते, 'श्रीभोगिनी' इति च लिखितमस्ति। अपरपार्श्वे सिंहस्य मूर्तिर्वर्तते, 'मानाङ्क' इति च लिखितं विद्यते[४]। गुणाङ्कस्य मुद्रास्वेकस्मिन् पार्श्वे पद्मासनाया लक्ष्म्या मूर्तिः, अपरपार्श्वे च

---

१. विंसेण्ट स्मिथ—कैटलाग – पृष्ठ २७२, २७३, प्लेट २७–१७ – कह्लणस्य राजतरङ्गिणी।

२. राखालदास बैनर्जी – प्राचीन मुद्रा – पृष्ठ २२६। इण्डियन म्युजियम कैटलाग–खण्ड २, प्लेट १, संख्या १।

३. राखालदास बैनर्जी – प्राचीन मुद्रा – पृष्ठ २६५; क्वायन्स आफ मिडिवल इण्डिया, पृष्ठ ८६, संख्या १२।

४. विंसेण्ट स्मिथ – कैटलाग आफ क्वायन्स इन दी इण्डियन म्युजियम, पृष्ठ २८३।

हस्तिनो मूर्तिरस्ति । लक्ष्म्या मूर्तिसमीपे श्रीगुणाङ्क इति लिखितं लभ्यते[1] । गुणाङ्कस्य नाम नेपालस्य राजवंशावल्याम् 'गुणकामदेव' इति लिखितमस्ति[2] ।

एवं वयमवलोकयामो यन्मुद्रास्वपि लक्ष्म्या विविधानि रूपाणि प्राप्यन्ते। लक्ष्म्याश्चतुर्भुजविशिष्टं स्वरूपं तु नवमशताब्द्यां दशमशताब्द्यां वोपलभ्यते । पश्चाच्चेदं रूपं सर्वैर्भारतीयैः स्वायत्तीकृतमिति प्रतीयते । लक्ष्मीभुजानां चतुर्भुजत्वप्रदर्शनस्य कदाचित् कारणमिदं भवेद् यत् सा विष्णुपत्नीत्वेनाराध्यते स्म । तस्या वैष्णवत्वरूप-प्रदर्शनाय च तत्र चतुर्भुजत्वमपेक्षितम्, अतो लक्ष्मीरपि चतुर्भुजा प्रदर्शिता तासु तासु मुद्रासु ।

अनुवादकः —
श्रीरामप्रीतद्विवेदी ।



---

१. राखालदास बैनर्जी–प्राचीन मुद्रा–पृष्ठ २६६–२६७; रापसन–क्वायन्स आफ एन्श्येण्ट इण्डिया—पृष्ठ ११६, प्लेट १३, संख्या २ ।

२. हरप्रसाद शास्त्री–कैटलाग आफ पाम लीफ एण्ड सेलेक्टेड पेपर मान्युस्क्रप्ट्स दरबार लाइब्रेरी, नैपाल, इण्ट्रोडक्शन बाई प्रो० सी० बेण्डाल–पृष्ठ २१ ।

# औषधसिद्धयः

आयुर्वेदबृहस्पती रामनाथो द्विवेद्युपाह्वः, का० हि० वि० वि० प्राध्यापकः ।

## सिद्धिप्राप्तेः साधनानि

सिद्धिप्राप्तेर्बहुविधानि साधनान्युक्तानि । संक्षेपतो हरिस्मरणपूर्वकं योगधारणया सिद्धीनामवाप्तिर्भवति । पातञ्जलयोगसूत्रानुसारतो जन्मौषधितपस्यासमाधिभिः सिद्धिप्राप्तिर्भवति । श्रीमद्भागवते भगवतः श्रीकृष्णस्योद्धवं प्रत्युक्तिर्वर्तते यद् जन्मौषधितपस्यादिलभ्याः सिद्धयो योगेन लभ्यन्ते । चरकमहर्षिणा सिद्धीनामुल्लेख ऐश्वर्यनाम्ना कृतः । सम्पूर्णसिद्धियुक्तः पुरुषः 'भगवान्' इति कथ्यते । चरकसंहिताया उपदेष्टा भगवान् पुनर्वसुरात्रेयः कथ्यते, यथाऽध्यायसमाप्तौ दृश्यते—इति ह स्माह भगवानात्रेयः । 'भगवान्' इति शब्दस्य व्याख्यां कुर्वन् चतुराननचक्रपाणिदत्त उक्तवान् यद् यः सकलैश्वर्य-वीर्य-श्री-ज्ञान-वैराग्यादिभिर्युक्तः स 'भगवान्' इति शब्देनाभिधीयते, अथवा य उत्पत्तिप्रलये जानाति, जीवानामावागमने जानाति, तथा विद्याविद्ये जानाति स 'भगवान्' इति शब्देनाभिधीयते । एतादृश्यः सिद्धय ऐश्वर्यपदवाच्याः ।

## ओषधिद्वारा सिद्धिप्राप्तेर्युक्तिमत्ता

एतादृश्यः सिद्धयो जपमन्त्रतपःसमाधिभगवदुपासनाप्रभृतिभिः कर्मभिः प्राप्तुं शक्याः, यतस्तु यद् दुष्करं दुर्गमं दुस्तरं तथा दुरापं तदपि तपसा प्राप्यते । किन्त्वोषधिसेवनेन धारणेन वा केवलं सिद्धयो लभ्यन्त इतीषत् संशयकर प्रतीयते । प्रस्तुतलेखस्याप्युद्देश्योऽस्याः स्थितेः स्पष्टीकरणमस्ति, अर्थादाध्यात्मिकाधिदैविकोपासनापद्धतिभिर्याः सिद्धयो लभ्यन्ते, तासामवगमः कथमाधिभौतिकसाधनैः सम्भवेत् ?

ग्रन्थेष्वोषधीनां चतुर्वर्गो विद्यते—१. दिव्यौषध्यः, २. रसौषध्यः, ३ महौषध्यः, ४. सिद्धौषध्यः । ओषधीनां सूची तु विस्तृता विद्यते । आस्वोषधीषु पारदस्योपयोगो बन्धने, मारणे, नियमने इत्यादिषु दृश्यते । एता विहाय बहुविधानां

दिव्यौषधीनां वर्णनमपि चरकसुश्रुतादिसंहितासु दृश्यते। एषु ग्रन्थेषु सोमब्राह्मी-श्वेतकपोतीकृष्णकपोतीछत्रातिछत्रादिनानादिव्यवनस्पतीनामुल्लेखो दृश्यते। सोमातिरिक्तं सोमसदृशवीर्यवतीनामष्टादशदिव्यौषधीनां वर्णनमपि प्राप्यते। विस्तरभयेन कासाञ्चिदेवोल्लेखः क्रियते।

उपर्युक्ताः सर्वा दिव्यौषधयो दुर्लभाः। कृतघ्नैः पापकर्मभिरालस्ययुक्तैश्च नैताः प्राप्यन्ते। पुण्यकर्मभिर्वने आश्रमे पर्वतेषु नदीनां तटाकानां च कूलेष्वेताः सिद्धयो लभ्यन्ते। अतः सावधानेन मनसा आसामन्वेषणे संलग्नता कार्या, सौभाग्यत एता लभ्यन्ते। यतः पृथिवी वसुमती 'वसून् धारयतीति'। सोमस्त्वोषधीनां राजा। अस्मिन् चन्द्रमस इव ह्रासो वृद्धिश्च भवति। पूर्णिमादिने एषा वनस्पतिः पञ्चदशपत्रैः पूर्णा भवति, ह्रासक्रमेण दर्शे निष्पत्रा भवति; वृद्धिक्रमेण पूर्णिमायां पूर्णपत्रा पञ्चदशपत्रा वा भवति। सुश्रुते सोमकल्परसायनस्य वर्णनमुपलभ्यते। फलश्रुतौ लिखितं यदस्याः सेवनेन दशवर्षसहस्राणां नवजीवनं भवति। चरके सोमेनान्यासामष्टौषधीनां सेवनं विहितम्, यासां षण्मासपर्यन्तं सेवनेनायुर्वृद्धिः, आरोग्यम्, वर्णकान्तिः, मेधावृद्धिः, बलवृद्धिरन्येच्छानामवाप्तिश्च भवति।

## रसायनौषधीनां सिद्धिः

उपर्युक्तानां दुर्लभानां दिव्यौषधीनामतिरिक्तं साम्प्रतिकानां सुलभानां नानौषधीनामपि वर्णनं वैद्यकग्रन्थेषु प्राप्यते, यासामुपयोगेन योगोक्तकायसम्पदः सिद्धिर्भवति। रसायनौषधीनां प्रशंसायां लिखितं वर्तते—इमानि रसायनानि महर्षि-गणसेवितानि। एषां सेवनेन नरो नीरुक्, दीर्घायुष्मान्, कान्तिमान्, बलवांश्च भवति। तस्य शरीरं कान्त्या सूर्य इव चन्द्र इव च भवति। स्मृतिशक्तिवृद्ध्या श्रवण-समकालमेव धारणं भवति। रसायनसेविनो नरस्य शरीरम् ऋषिसत्त्वं भवति। स पर्वत इव पृथ्वीधारकः, वायुरिव बलवान् भवति। तस्य शरीरे विषप्रभावो न भवति। च्यवनऋषेश्च्यवनप्राशस्य सेवनाद् यौवनं विश्रुतमेव —

"रसायनं तु तद् ज्ञेयं यज्जराव्याधिनाशनम्।"

सुश्रुत ऋषी रसायनतन्त्रस्य परिभाषां कुर्वन् लिखति—रसायनतन्त्रं वैद्यक-तन्त्रस्य तदङ्गम्, यस्मिन् वयःस्थापन-आयुष्कर-मेधाकर-रोगापहरण-जराहरणप्रभृतीनां सिद्धीनां वर्णनं भवति।

रसायनानां प्रशंसा इत्थं क्रियते—यथा देवानां कृतेऽमृतम्, सर्पाणां कृते सुधा, तथैव प्राचीनकाले महर्षीणां कृते रसायनमासीत्। तस्य प्रभावेण तेषां जरा नासीत्, दुर्बलता नासीत्; ते रोगिणो न भवन्ति स्म, न तु म्रियन्त एव। रसायनस्य सेवनेन सहस्रवर्षं यावन्निर्बाधं जीवन्ति स्म। रसायनेन न केवलं दीर्घायुष्यमेव लभते, अपि तु परब्रह्मणोऽप्यवाप्तिर्भवति स्म। वाग्भटेन तु रसायनसेवनेन वाक्सिद्धि-प्रभृतीनामन्यासामपि सिद्धीनामवगम उक्तः।

योगोक्तानां विविधसिद्धीनां सदृशमेव रसायनस्योपयोगोऽपि विभिन्नकार्येषु भवति। रसायनस्य वर्गत्रयं वर्तते—१. काम्यरसायनम्, २. नैमित्तिकरसायनम्, ३. आजस्रिकरसायनञ्च।

काम्यरसायनानामुपयोगः काम्यकर्मणः प्राप्तये भवति। यथा प्राणकामीयम्, मेधाकामीयम्, आयुष्कामीयम्, श्रीकामीयं वा रसायनम्। नैमित्तिकं रसायनं तु रोग-विशेषस्य दूरीकरणाय भवति। यथा शिलाजतुरसायनस्य कुष्ठे, भल्लातकस्यार्शे कुष्ठे वा प्रयोगो भवति। आजस्रिकरसायनानां व्यवहारः सततोपयोगे भवति। यथा घृतस्य क्षीरस्य वा। एषामुपयोगेन शरीरस्वास्थ्यम्, आयुर्वृद्धिर्मेधावृद्धिश्च भवति।

## रसवैद्यकग्रन्थोक्ता औषधसिद्धयः

रसायनशब्दस्य व्यवहारो वैद्यकतन्त्रे रसपदघटितानामोषधीनामर्थेऽपि भवति। शास्त्रकारो नागार्जुनो रसविद्याया जन्मदाता कथ्यते। तस्य गर्वोक्तिरपि विद्यते—"सिद्धे रसे करिष्यामि निर्दारिद्र्यमिदं जगत्" इति। चिकित्साजगति स्वास्थ्यसंरक्षणाय रोगचिकित्सायै च पारदादिविभिन्नधातूनां तथा च विषौषधीनां प्रचलनं प्रारब्धम्। अस्मिन् युगे तु रसवैद्यानां संख्या एव सर्वाधिका वर्तते। रसविद्यायाश्चिकित्साकार्यातिरिक्तमन्ये अपि द्वे प्रमुखे उद्देश्ये आस्ताम्—१. लौह-सिद्धिः, अर्थादल्पमूल्यवतां धातूनां बहुमूल्यधातुत्वे परिवर्तनम्, तथा २. देह-सिद्धिः, देहस्य दृढीकरणम्। अस्मिन्नेवार्थे इमा ओषधयो रसायनानीत्युक्तानि। रसवैद्यकेऽनेकचमत्कारयुक्ताः सिद्धयो वर्तन्ते।

रसविद्यायाः प्रमुखोद्देश आसीच्छरीरस्याजरत्वममरत्वञ्च। पारदस्तु शिवबीजरूपेणोक्तः, यतस्तु स सर्वसिद्धीनां प्रदाता कथ्यते। संसारसागरात् पारयते

३

इति पारदः। अस्य प्रभावात् तद्विदो रसविद एव कथ्यन्ते। रससिद्धानामेकः पृथक् सम्प्रदाय एव जातः। अनेकेषां रसाचार्याणां नामाद्यापि प्रसिद्धं वर्तते—व्यालाचार्यः, चन्द्रसेनः, सुबुद्धिः, नरवाहुरित्यादयः सप्तविंशतिर्मुनयो भूपाश्च रससिद्धिदाः कथिताः। इमेऽद्यापि वार्द्धक्यं मृत्युञ्च विजित्य लोके विचरन्ति। इमे सिद्धपुरुषा ओषधीनां प्रभावेण सिद्धाः सञ्जाताः। आसां सिद्धीनां प्राप्तये सम्यक्साधन-उद्यम-गुरुकृपा-राजाज्ञा-अर्थसम्पन्नव्यक्तीनां ससाहाय्यमित्यादिकमपेक्षितं वर्तते, नान्यथा पारदसिद्धिर्भवति। अजरामरत्वस्य सिद्धिरेव देहसिद्धिः।

अपरा महत्तमा सिद्धिर्लौहसिद्धिः, यस्यां रसेन्द्रस्य महत्ता प्रमाणिता भवति। अस्यां बह्वीनां क्रियाणां साफल्यं वर्तते, यथा पारदबन्धनं पारदपिष्टिर्वा। एषा पारदविद्या अद्यापि कैश्चिद् नरैर्ज्ञायते। एकं ज्ञातारं लेखकोऽपि जानाति, तेन पारदसिद्धिः कृता वर्तते।

साम्प्रतं वैज्ञानिकानां चमत्कृतिहेतुरेतादृशी प्रक्रिया विद्यते, यस्यां द्रव्यस्य शक्तौ शक्तेश्च द्रव्ये परिणतिः सम्भाव्यते।

द्वादशसंस्कारभूतया द्रुत्या पारदस्य बद्धता भवति। अनन्तरमवशिष्टेषु संस्कारेषु क्रमशः सारणक्रामणादिद्वारा वेधनसंस्कारोत्तरं तत्र धातुपरिवर्तनस्य विलक्षणं क्षमत्वमायाति। एतद्द्वारा ताम्र-वङ्ग-नागादयः सुवर्णे परिणता भवितुमर्हन्ति। सिद्धविविधप्रयोगद्वारा स शतवेधी, सहस्रवेधी, लक्षवेधी, दशलक्षवेधीत्यपि कर्तुं शक्यते। ताम्रादिधातुषु तस्य सिद्धरसस्य शतांशादिमात्रां दत्त्वा समस्तमपि धातुपरिमाणं काञ्चनत्वेन परिणमयितुं शक्येतेति वेधस्यास्याभिप्रायः। रसस्येयमेव सिद्धी रससिद्धिरित्युच्यते। अतः परं पारदस्य रञ्जनाख्यः संस्कारः, ततश्चाष्टादशतमोऽन्तिमः सेवनाभिधः संस्कारोऽस्ति। पारदभस्मनो विधिपूर्वकं मात्रया सेवनेन देहसिद्धिद्वारा अशेषा रुजो विनश्यन्ति। देहो ह्यजरामरतां याति। इदमेव हि लौहकरं भूत्वा स्वल्पमूल्यकाभ्योऽपि धातुभ्यः सुवर्णरूपतां ददाति। रसेन्द्रोऽयं सर्वसिद्धिकरो विद्यते। अस्योपलब्धिर्गुरुकृपा-शिव-महाभैरवादिदेवाराधनपूजनादिद्वारैव सम्पद्यते। रसग्रन्थेष्वेवंविधं वचनमपि समुपलभ्यते।

कल्हणकृतराजतरङ्गिण्यां चतुर्थेऽध्याये बुखाराप्रान्ततः समागतस्य चङ्कणनाम्नो रसवैद्यस्योल्लेखो विद्यते, येन रससिद्धिद्वारा राज्ञः कोषं सुवर्णेन प्रपूर्य तस्य स्नेहभाजनत्वमवाप्तम्।

काश्यां दिवङ्गतः श्रीकृष्णलालजीशर्मा लेखकेन साक्षात्कृतः, तेन चासकृत् सिद्धसूतेन ताम्रात् सुवर्णं परिणतम्। एकदा विरलामहोदयस्योपस्थितावष्टादश-शेटकपरिमितं सुवर्णं ताम्रधातुना निर्मायाखिलभारतीयवैद्यसम्मेलनाय दानस्वरूपेण प्रदत्तम्।

## खेचरत्वादयः सिद्धयः

अतः परमपि बहुविधानां चमत्कृतिविधायिकानां सिद्धीनामुल्लेखो रसग्रन्थेपू-पलभ्यते। तथा हि—

(क) धूमवेधी रसः—धूमादेवान्यधातोः सुवर्णे परिणतिर्जायते।

(ख) स्पर्शवेधी रसः—केवलं स्पर्शादेवाष्टधातवः सुवर्णरूपतां प्राप्नुवन्ति।

(ग) शब्दवेधी रसः—मुखे पारदगुटिकां धृत्वा शब्दमात्रेणाष्टधातूनां सुवर्णे परिणतिर्भवति।

(घ) पाषाणवेधी रसः—अनेन हि रसेन पाषाणोऽपि सुवर्णतां गच्छति।

(ङ) मेदनीवेधी रसः—एकस्य सर्षपस्य अर्धांशेन चतुर्थांशेन वा पर्वतारण्या-वनयः स्वर्णमया भवन्ति।

(च) कोटिवेधी रसः—अस्य मुखे हस्ते च धारणेन मनुष्या दिव्या खेचराश्च भवन्ति। महाकायाः, महाबलाः स्वेच्छाचारिणः, शिवसदृशाश्च भवन्ति। तेषां मूत्र-पुरीषयोः स्वेदनमात्रेण स्पर्शमात्रेण वा सर्वे धातवः सुवर्णरूपतां भजन्ते। इत्थं हि रसकार्यो महासिद्धः पुरुषः सर्वत्र पूजितो भवति। स हि देवैर्दैत्यैर्वाऽवध्यो भवति। आचन्द्रसूर्यं दिव्यभोगानुपभुञ्जानो भैरववत् क्रीडति।

सिद्धनागार्जुनसम्बधिनी एका कथा प्रचलिताऽस्ति यत् स स्वाश्रयदात्रा राज्ञा सह चतुश्शतवर्षपर्यन्तं जीवितः सन् स्वकार्यरत आसीत्। अस्मिन्नवधौ तस्या-नेका महिष्यः, तासु बहवो राजकुमाराश्च बभूवुः। कालवशाद् बालका वृद्धा भवन्तो दिवं गताः। अन्तिमा महिषी कुमारमेकमसूत। स च बालको महत्त्वा-भिलाष आसीत्, तेन हि स्वमातुः सकाशं राज्यशासनव्यवस्थाविषये किमपि संशोधनमुपस्थापितम्, किन्तु मात्रा एवं सम्बोधितः—"पुत्र! राज्यव्यवस्थासंशोधनं राज्यप्राप्त्यनन्तरं सम्भाव्यते, राज्यप्राप्तिश्चासंभवा।" कथमिति जिज्ञासायां महिष्या

रहस्यमिदमुद्घाटितम्—"वत्स ! त्वत्सदृशा बहवः कुमारा मद्विधाश्च बह्व्यो महिष्योऽस्य राज्ञः सञ्जाताः कालेन कवलिताश्च, किन्त्वद्यावधि न कोऽपि कुमारो राजपदमथवा न काऽपि महिषी राजमातुः पदमलञ्चकार। यतो हि नागार्जुननामको रससिद्ध एको राजवैद्य इच्छामृत्युर्वर्तते, तस्यैव प्रभावेण राजाऽपि दीर्घजीवी सन् चतुश्शतवर्षेभ्यो राजपदमलङ्करोति। नागार्जुनेऽस्तङ्गते हि राज्ञोऽवसानम्" इति।

नागार्जुनो महानुपासक आसीत्। तस्य पूजाकाले कस्यापि जनस्य प्रवेशो निषिद्ध आसीत्। तस्य पूजागृहं सर्वतः प्रहरीभिः सुरक्षितमासीत्। नागार्जुनो महान् दानी आसीत्। पूजाकाले कस्यापि याचकस्य याचनाऽमोघा न भवेदिति तस्य प्रतिज्ञा, अत एव पूजाकाले तत्र गन्तुं न कस्याऽपि कृतेऽनुमतिरासीत्। रहस्यमिदं ज्ञात्वा राजकुमारः केनापि प्रकारेण पूजाकाल एव नागार्जुनमुपसृत्य तस्य प्राणान् याचयामास। दानी नागार्जुनः कुमारस्य याचनां स्वीकृत्यासिद्वारा स्वशिरश्छेदनोपायं च प्रदर्श्य कुमारमभिलषितफलं चकार। एवमस्तङ्गते नागार्जुने राज्ञो जीवनलीलाऽप्यस्तं गता। एवंविधमन्यमप्योषधिजन्यसिद्धीनामुपाख्यानमुपलभ्यते।

## वेदे ओषधिसिद्धयः

वेदे रोगाणां निवारणाय, शरीरस्याजरामरत्वसिद्धये चौषधिरूपेण सूर्याग्निजलविद्युद्वायुनक्षत्रादीनां वर्णनमस्ति। आञ्जन-शङ्ख-मृगशृङ्ग-सीसकव्यतिरिक्तानामशेषाणामपि रोगाणां चिकित्सायां वनस्पतीनां प्रयोगो भवति। एता ओषधयोऽतीव प्रभावोत्पादिका निर्दिष्टाः सन्ति। निम्नलिखितानां सप्तदशौषधीनां वर्णनं सविस्तरमायाति। तथाहि—( १ ) अजशृङ्गी, ( २ ) अपामार्गः, ( ३ ) अरुन्धती, ( ४ ) कुष्ठः, ( ५ ) केशदृंहणी, ( ६ ) क्लीबकरणी, ( ७ ) तलाशा, ( ८ ) तौवलिका, ( ९ ) दशवृक्षः, ( १० ) पाटा, ( ११ ) पिप्पली, ( १२ ) पृश्निपर्णी, ( १३ ) रोहिणी, ( १४ ) लाक्षा, ( १५ ) सहस्रचक्षुः, ( १६ ) सहस्रपर्णी, ( १७ ) सोमलता।

देहे मणिबन्धनस्य तद्धारणस्य वा वर्णनं वेदे विद्यते। अत्र मणिशब्दवाच्यः सूर्यकान्तश्चन्द्रकान्तो वा नास्ति; प्रत्युत वनस्पतीनां मणिरस्ति। तेषां मणीनां सिद्धिरपि वर्णिता विद्यते। इमे मणयः कृमिघ्नाः, रोगशत्रुनाशकाः, बलवर्धकाश्च भवन्ति।

वेदे वैद्यस्थाने भिषजूशब्दस्य प्रयोगो विद्यते। यथा—'पवित्राय भिषक' ( यजुर्वेदे ३०।१० ) वैद्यस्य स्थानमतिपवित्रमिति तात्पर्यम्। वेदे परमात्मैव श्रेष्ठो

वैद्यः कथितः । यथा—"उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि" ( ऋग्वेदे २।३३।४ ) । अर्थाद् हे रोगनाशक परमेश्वर ! अस्माकं वीरेभ्य औषधं देहि, वेदेषु परमवैद्यतया त्वं श्रूयस इति । "अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्" ( यजुर्वेदे १६।५ ) ।

संहितासु दैव्य-मानुषभेदेन द्विविधो भिषग् विद्यते । दैव्यस्तु प्राकृतिको वैद्यः, ते हि—अग्नि-रुद्र-वरुण-इन्द्र-अश्विदेवमरुत्सरस्वतीप्रभृतयः सन्ति । मनुष्येषु कीदृश ओषधिसिद्धौ भिषग् भवेत्, अस्मिन् विषयेऽस्ति शोभनोपदेशः । यथा —

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग् रक्षोहामीवचातनः ॥
( ऋग्वेदे १०।९७।६ )

अर्थाद् रक्षसां रोगाणाञ्च नाशक एव मेधावान् विप्रो वैद्यशब्देनोच्यते ।

ऋग्वेदस्य १०।९७ तथा अ० ८।७ सूक्तेष्वोषधीनां गुणबोधकानि बहूनि नामानि समागतानि । अथ च ऋग्वेदे ओषधीनां मणीनां च महद्गुणाख्यानपरा बहवो मन्त्रा अपि स्फुटतया विद्यन्ते, यैरोषधिभिरपि सिद्धेः प्राप्तिर्भवतीति सिध्यति । ईदृशानां कतिपयगुणवाचिशब्दानां नामोल्लेखोऽत्र विधीयते । यथा—( १ ) दिव्याः ( दिव्यगुणयुक्ताः ), ( २ ) धनं सनिष्यन्तीः, ( ३ ) पारयिष्णवः, ( ४ ) प्रचेतसः, ( ५ ) बृहस्पतिप्रसूता, ( ६ ) वावशाना, ( ७ ) सजित्वरी, ( ८ ) शतक्रत्वः, ( ९ ) स्वधितिः, ( १० ) शतहायनः, ( ११ ) सहस्रवीर्यम्, ( १२ ) तृष्णामारम्, क्षुधामारम्, अक्षपराजयम्, ( १३ ) कृत्यानाशका, ( १४ ) सहस्रचक्षुरित्यादीनि नामानि सन्ति ।

## सिद्धवैद्यः

दक्षिणभारते सिद्धवैद्यानामेकः सम्प्रदाय एवास्ति । अयं ज्ञानसिद्धः, अस्य चिकित्सापद्धतिश्च सिद्धपद्धतिरित्युच्यते । अस्य हि स्वतन्त्रं कार्यक्षेत्रमस्ति । संभवत ओषधिजन्यसिद्धिप्राप्तिद्वारैव सिद्धोऽयमिति कथितो भवेत् । अस्य विषयस्य प्रामाणिका ग्रन्थाः क्षेत्रीयभाषासु लिपिषु च प्राप्यन्ते ।

# ओषधीनां दैविकं स्वरूपम्

ओषधीनां भौतिकस्वरूपातिरिक्तमाधिदैविकमाध्यात्मिकञ्च स्वरूपमस्ति। अस्य कथनस्य तात्पर्यमिदं यदोषधीनां स्थूलमेव रूपं सर्वं नास्ति, अपि तु तासां सूक्ष्ममप्यचिन्त्यशक्तिरूपं स्वरूपमस्ति। इयं ह्यचिन्त्यशक्तिस्तस्या अध्यात्मतत्त्वेषु निहिता अस्ति। तन्त्रग्रन्थेषु शतावरी-लवङ्ग-दूर्वा-बन्धूक-जपा-मन्दार-श्वेतभञ्जाप्रभृतीनामोषधीनामाधिदैविकाध्यात्मिकाचिन्त्यशक्तीनां सूक्ष्मविवेचनं मिलत्येव। इत्थं पूर्वोक्तौषधिव्यतिरिक्ता अन्याऽपि यावतीय-वानस्पति-जान्तवादिपार्थिवद्रव्याणां स्थितिर्विद्यते। अस्य हि स्थूलं सूक्ष्मं चेति रूपद्वयं विद्यते। स्थूलपदार्थानां शक्तीनाञ्च ज्ञानं मनुष्यैः स्थूलदृष्ट्या प्राप्यते, यतो हि ते पदार्थाः, ताश्च शक्तयः प्रत्यक्षभूताः सन्ति। सामान्यतो मानवीप्रवृत्तिः प्रत्यक्षे व्यक्ते वा दृश्ये रमते, विशेषकारणमन्तरा अव्यक्तदृश्यं प्रति नैवानुधावति। ये जना विचारचक्षुषा सृष्टिं निरीक्षन्ते, तेषां हि दृश्यस्थूलजगतः परं किमप्यदृश्यं सूक्ष्मतत्त्वं प्रतिभाति। यदा हि तददृश्यं तत्त्वं दृश्यतत्त्वमिव तेषां प्रत्यक्षं भवति, तदा दृश्यवस्त्वपेक्षया सूक्ष्मवस्तु प्रति तेषां दृढा भक्तिर्जायते, यतो सूक्ष्मवस्तूनां सामर्थ्यं स्थूलवस्त्वपेक्षयाऽधिकतरं भवति। एषैव स्थितिस्तदोषधीनामपि विद्यते।

अस्मिन् भूमण्डले प्रथममोषधीनामुत्पत्तिरभूत्, व्यतीते च युगत्रये मनुष्याणाम्। वेदेषु (१) वनस्पतियुगः, (२) जलजन्तुयुगः, (३) सर्पयुगः, (४) पशुयुगः, (५) मनुष्ययुग इति सृष्टिक्रमो निर्दिष्टो विद्यते। आसामोषधीनां सप्तोत्तरैकशतभेदाः सन्ति, अष्टादशौषधयो मातरो देव्यश्च सन्ति, मान्या मातरो भवन्ति, देवशक्तिधारिकाश्च देव्यो भवन्ति। इत्थं हि देवीस्वरूपाङ्गता मातरः स्वानुकम्पया कस्मैचिदपि विनीतसाधकाय सिद्धिं प्रयच्छन्ति। एवं प्रकारेणौषधीनां विभिन्नदेवीभिः सह साक्षात्सम्बन्धो विद्यते। अथ च तत्तदोषधीनां सम्यक् सेवनेन तत्तद्देवीनां शक्तेः सिद्धिर्भवति। अथर्ववेदे पिप्पलीनामकौषधिविषये एवमुक्तं यद् जीवितं स्थातुमेका इयमेवौषधिः पर्याप्ताऽस्तीति देवैः कल्पितम्। (अथर्व ६।१०९।१) ओषधीनां तान्त्रिकसूक्ष्ममहत्त्वविवेचनपरमतोऽपि वचो विद्यते। सोमराजानं सम्बोध्य ओषधय एवं वदन्ति—"राजन्! यस्य कृते ब्राह्मणा अस्मान् योजयन्ति, तस्य कृते तादृशी एव सिद्धिर्जायते।"

चरकसंहितायां धर्माधर्मप्रसङ्गे शुभाशुभफलानां वर्णनं कुर्वन् ऋषिरेवं लिखितवान् यत् कृतयुगे स्वधर्माचरणेन मनुष्या दीर्घायुष ओषधयश्चामितप्रभावशीला भवन्ति स्म। भगवता व्यासेनापि लिखितं यत्—कृते पुरुषाः सर्वसिद्धार्थाः चतुर्वर्षशतायुष आसन्, त्रेताद्वापरयोः क्रमशश्चतुर्थांशधर्महानिः, तदुत्तरं कलौ हि विपरीतधर्माचरणेनाल्पायुषः प्राणिनोऽल्पप्रभावशीलाश्चौषधयः शेषाः सन्ति। फलत ओषधिसिद्धीनामपि क्रमिको ह्रास एव जातः।

रामायण-महाभारतकालेऽप्योषधिसिद्धेः प्रसङ्गो मिलत्येव। खरदूषणताटकादिवधप्रसङ्गे भगवता वसिष्ठेन प्राप्ता दिव्यौषधयः श्रीरामचन्द्रेण प्रयुक्ताः। हनूमता आनीता संजीवनी मृतप्रायस्य लक्ष्मणस्य पुनर्जीवनदायिनी संजातेति प्रसिद्धम्। महाभारते भीमस्य सर्वविषचिकित्सायाः संजीवनीविद्यायाः काश्यपमुनेराश्चर्यचिकित्सायाश्चाख्यानमपि प्रसिद्धमेव। एवमेवान्येष्वपि पुराणेष्वोषधिसिद्धिविषयोल्लेखा उपलभ्यन्त एव।

वर्तमानकाले कतिपयमहापुरुषाणां संसर्गेणानेकौषधिसिद्धिचमत्कृतिर्ज्ञानपथे आयाता। (क) युगमधस्तूरस्य फलं यदि प्राप्तं भवेत् तर्हि तस्याघोरमन्त्रेण ग्रहणे श्मशाने लक्षत्रयपुरश्चरणकरणेन लक्ष्म्याः सिद्धिर्भवति। (ख) श्वेतभुजाकल्पेन विविधाश्चमत्कारयुता महत्यः सिद्धयो भवन्ति। (ग) श्वेतमन्दारकाष्ठनिर्मितपादुकाया जलस्तम्भनादिसिद्धयः प्राप्यन्ते। (घ) श्वेतदूर्वादलस्यापि सिद्धकल्पः प्राप्तो भवति।

ओषधिसिद्धिविषयेऽन्योऽप्येको विमर्श उपस्थाप्यते। समाधिना सिद्धिप्राप्तिर्भवतीति तु सर्वमान्यः सिद्धान्तः। अयं समाधिरपि योगसाधनैः प्राप्यते। उक्तञ्च योगसूत्रे पतञ्जलिना—"योगश्चित्तवृत्तिनिरोधः"। चित्तवृत्तिनिरोधकेन कृत्रिमविधिना रोगी संज्ञाशून्यो भवितुमर्हति। अस्याः क्रियायाः स्वरूपसमता शल्यकर्मणि व्यवहृता सती क्रियते। ईदृगोषधयश्चित्तवृत्तिं निरुध्य लोकान् योगस्थान् कृत्वा सिद्धिप्रदा भवितुमर्हन्ति। ईदृशोऽपि विचारः प्रस्तूयते। रसायनसिद्धेरेक आलोचनात्मको विचारोऽयमप्यस्ति यज्जगतः सर्वं वस्तुजातं विनाशि वर्तते। तत्सर्वं जीर्णं सद् विनष्टतां याति। संसारस्यैष स्वभावः। स्वभावेनैव नूतनवस्तूनि जीर्णतामवाप्य कालकवलितानि भवन्ति। अनेनैव प्रकारेण मनुष्यप्रभृतयः प्राणिनो रोगिणो भवन्ति।

तेषु क्रमशो जीर्णावस्थाद्वारा निधनावस्था जायते। केशादीनां श्वेतमादिकमपि वार्धक्यमेव विद्यते। समासतो यौवने यादृशी कार्यक्षमता लोकेषु विद्यते, तस्याः क्रमिको ह्रासो वार्धक्ये जायते। इदं सर्वमपि परिवर्तनं कालपरिणामकृतं स्वाभाविकं मर्त्यलोकेऽवश्यं भावि च विद्यते। देवयोनौ कालकृतं परिवर्तनं न भवति, मनुष्यदेवयोन्योरयमेष विशेषः।

मानवा अनेकयुगेभ्यो देवत्वप्राप्तये प्रयतमानाः सन्ति। परिणामतः साम्प्रतिका वैज्ञानिका अपि रोगान् विजेतुमारब्धप्रयत्ना विद्यन्ते। तत्प्रयासेनैव च महतां रोगनिवारकसाधनानामाविष्कारो जायते। लोकानां रोगनिवारणार्थमेव विश्वस्वास्थ्यसङ्घस्यापि स्थापना जाता।

## आधुनिकविज्ञानयुगस्य सिद्धयः

साम्प्रतिके औद्योगिके यान्त्रिके वा युगे विज्ञानस्य भौतिकसाधनैरनेकाः सिद्धयो यन्त्रसाहाय्येन सुलभा अभूवन्। यथा—वायुयानद्वारा आकाशभ्रमणम्, रेडियोटेलीविजनप्रभृतियन्त्रद्वारा दूरदृष्टिदूरश्रवणादयः सिद्धयः। अनेनैव ह्यन्ययान्त्रिकसाधनैर्विविधाः सिद्धयः प्राप्ताः सन्ति, किन्तु ताभिर्योगसिद्धीनामुद्देश्यपूर्तिर्नैवाऽभूत्। एताभिः सिद्धिभिरनन्तानन्दाद्यपेक्षया दुःखाशान्तिबन्धनाद्याः पीडा वर्धन्ते वर्धिष्यन्ते च।

प्राचीनतमाः सिद्धयो व्यक्तिनिष्ठा आसन्। तासां साधनाऽप्येकाकिनैव क्रियते स्म। गुरोरत्यधिकं महत्त्वमासीत्। तस्यैवानुकम्पया व्यक्तिविशेषेण साधनाद्वारा सिद्धिः प्राप्यते स्म। सिद्धेर्यत्र तत्र प्रकाशनेन तत्र महती हानिर्जायते। फलत एताः सिद्धयोऽतीव गोप्या इति मन्यते। योग्याधिकारिणे एव सिद्ध्युपदेशः प्रदेयो भवतीत्यस्याशयः। अधुना नहि तादृशः कश्चिद् गुरुः, न च तादृशः शिष्यो यः किमपि तथ्यमुपदिशति यश्च कोऽपि गृह्णाति। दातॄणामभावस्तु सिद्धपुरुषाभावहेतुको ज्ञानग्राहकाणामभावश्च श्रद्धाविश्वासयोरभावहेतुको विद्यते। ओषधीनामपीयमेव दशा विद्यते। यद्यपि स्थितिर्नैवानुकूल्यं भजति, तथाप्यस्माभिः सिध्यर्थं प्रयासो नैरन्तर्येण विधेय एवेत्यलं विस्तरेण॥



# साहित्यरत्नाकरस्थपद्यविमर्शः

## ( साध्यवसानातिशयोक्ती )

श्री के० राजन्नशास्त्री, संस्कृतसाहित्यरत्नं विद्याप्रवीणः, B.O.L, संस्कृतपरिषत्,
उस्मानियाविश्वविद्यालयः, हैद्राबादः (आ० प्र०) ।

दृश्यते च साहित्यरत्नाकरे तृतीये तरङ्गे —

निगीर्णो विषयोऽन्येन यदि साध्यवसानिका ।
सा पूर्ववद् द्विधा तेन लक्षणाः सप्त लक्षिताः ॥

विवृतं च सोदाहरणं ग्रन्थकृता स्वयमेव—

अन्येन विषयिणा विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसायः, तेन सहिता साध्यवसाना। तत्राद्या यथा—'अयं कामधेनुः' इत्यत्रानवरतवितरणशीलत्वगुणसादृश्याद् रामे कामधेनुरूपताध्यवसानम्, सर्वथैवाभिन्नत्वप्रतीतिः प्रयोजनम्। द्वितीया यथा—'अयमभ्युदयो लोकानाम्' इत्यत्राभ्युदयहेतुत्वाद् रामेऽभ्युदयशब्दप्रवृत्तिः। अव्यभिचारेण कार्यनिष्पादकत्वमिहापि प्रयोजनम्। अत्रोभयत्रापि 'अयम' शब्दो न रामाख्यविषयपरामर्शी; तदा सारोपात्वप्रसङ्गात्, किन्तु तद्गतेदन्तामात्रं परामृशन् विषयिणीमारोप्यमाणां कामधेनुमेव पुरोवर्त्यभेदाध्यवसायेनेदन्तया विशिनष्टि। तद्विशिष्टा च विषयिणी कामधेनुर्निगीर्णविषयतया स्वतादात्म्येन प्रतीयते। एवम्—'अयमभ्युदयः' इत्यत्राप्यूह्यम्। इयमतिशयोक्तेर्बीजम्। 'अध्यवसितप्राधान्ये त्वतिशयोक्तिः' ( अलं० स० ) इति लक्षणम्।

समुदाहृता च सेयमतिशयोक्तिः सप्तमे तरङ्गे तेनैव—"भेदेऽभेदोक्तिर्यथा—

जडव्युत्पन्नस्त्वं नहि न च पलाशप्रकृतिको
न ते सन्ति च्छिद्राण्यपि न भवतो वक्रिमगुणः ।
न वा नित्यं योगो भवति मधुपैर्नापि विटपै-
र्न वा ते कम्प्रत्वं तदपि रघुप ! त्वं सुरतरुः ॥" इति ।

अत्रेदं विचार्यते—न "तावदयं कामधेनुः"—इत्यत्र रामे कामधेनुरूपताध्यवसानम्, येनेदं गौणसाध्यवसानाया उदाहरणं स्यात्। यदि नाम 'अयम्' इत्यनेन विषयिणी कामधेनुः परामृश्येत, तर्ह्येवास्य तदुदाहरणत्वं युज्येत, न चैतदस्ति; 'अयम्', 'कामधेनुः' इत्यनयोर्भिन्नलिङ्गकत्वेन सामानाधिकरण्याभावात्, किन्तु रामाख्यविषय एवात्र परामृश्यते।

तथा च विषयस्याभिहितत्वेन तन्निगरणपूर्वकाभेदप्रतिपत्तिरूपाध्यवसायाभावान्नात्र साध्यवसाना, किन्तु सारोपैव।

तथापि यदि—'अयम्' इत्यस्य कामधेनुपरामर्शकत्वे आग्रहः, तर्हि भिन्नलिङ्गत्वे किं वा निमित्तं वाच्यं स्यात्?

ननु[1] भवतीदं निमित्तं भिन्नलिङ्गतायाम्। यथा—अयमिति शब्दो न विषयं परामृशति, किन्तु विषयगतेदन्तामात्रम्। तदनु पुरोवर्त्यभेदाध्यवसायेन निगीर्णविषयां विषयिणीमिदन्तया विशिनष्टीति प्राथमिकांशमादायेदमः पुंलिङ्गतया निर्देश इति चेन्मैवम्; निगीर्णत्वाद् विषयस्य विषयिण्या एवात्र प्राधान्येन तत्सामानाधिकरण्यपरित्यागे बीजाभावात्, मुख्यं परित्यज्य गौणानुधावनस्यान्याय्यत्वात्, विशेषणविशेष्ययोः समानलिङ्गविभक्त्यादिकत्वनियमाच्च, "अनाकाशे कोऽयं गलितहरिणः शीतकिरणः" इत्यादाविदमो विषयिविशेषणत्वेनैव प्रयोगदर्शनाच्च।

एवं च यदीदमो विषयिविशेषणत्वं सम्पाद्य—'इयं कामधेनुः' इत्युदाह्रियेत; तर्हि भवेदिदमुदाहरणं साध्यवसानायाः, अन्यथा—'अयम्' इत्यनेन विषयस्याभिहितत्वात् सारोपाया एवात्रावतारः स्यात्।

तथा चोक्तं पण्डितराजेन तदेतल्लक्षणामूलकातिशयोक्तिं लक्षयता—

"कथं तर्हि—'कमलमिदमनम्बुजातं जयतितमां कनकलतिकायाम्' इत्यादाविदन्त्वादेर्विषयतावच्छेदकस्योल्लेखान्निगरणमिति चेन्न; इदमित्यस्य कमलविशिष्टे विशेषणत्व एवातिशयोक्तिः, उद्देश्यतावच्छेदकत्वे तु रूपकमेव" (रसगङ्गा.द्विती.अति.) इति।

उक्तं चाप्यलङ्कारचन्द्रिकायाम्[2]—

---

१. पूर्वपक्षोऽयम्—'अत्रोभयत्रापि' इत्यादिमूलग्रन्थभागांशरूपः।

२. रामभट्टात्मजवैद्यनाथकृतकुवलयानन्दव्याख्यायामित्यर्थः।

"ननूक्तोदाहरणेष्वयमिति विषयस्योपादानात् कथमतिशयोक्तिरिति चेत्, अत्राहुः—इदन्त्वस्य विषयिविशेषणत्वेन विवक्षायामतिशयोक्तिरेव, यदा तु विषयविशेषणत्वविवक्षा, तदा रूपकमिति व्यवस्था। अत एव प्रकाशकृता दशमे रूपकातिशयोक्त्यादिसन्देहसङ्करे—'नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदति' इत्युदाहृतम्" इति।

तथा—"जडध्युत्पन्नस्त्वम्" इत्युदाहृतपद्येऽपि 'त्वम्' इत्यनेन रामरूपविषयस्योपात्तत्वेन न विषयनिगरणपूर्वकाभेदप्रतिपत्तिरूपाध्यवसाय इति न भेदेऽभेदरूपातिशयोक्तेरिदमुदाहरणं भवितुमर्हति; अध्यवसितप्राधान्ये त्वतिशयोक्तिरिति लक्षितत्वात्।

निरूपितं च तथैव प्राचीनैरालङ्कारिकैः। यथा—

"निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।" (का० प्र० १०।१००) इति लक्षयित्वा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥

इत्युदाहृतं मम्मटपादैः।

अलङ्कारसर्वस्वकृद्भिरपि—"अध्यवसितप्राधान्ये त्वतिशयोक्तिः" इति सूत्रयित्वा तत्र भेदेऽभेदरूपातिशयोक्तित्वेन पूर्वोक्तमेव पद्यं समुदाजह्रे।

रसगङ्गाधरकारैश्च—"विषयिणा विषयस्य निगरणमतिशयः। तस्योक्तिः" इति लक्षयित्वा 'स्मृतापि तरुणातपम्' इत्युदाहृतम्।

एवं साहित्यदर्पणकृद्भिरपि—

"सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते" इति संलक्ष्य "तत्र भेदेऽभेदो यथा मम—

कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम्।
कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात्॥"

इत्युदाहृतम्।

तथा विद्यानाथेनापि—

विषयस्यानुपादानाद् विषय्युपनिबद्ध्यते।
यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता।

तत्र भेदेऽभेदो यथा—

स्थाने कल्पतरुर्जातः काकतीयकुलोदधेः ।
लक्ष्मीपतिरसौ चित्रं मर्त्यरूपमहोत्सवः ॥
( प्रतापरुद्रीये )

इत्युपपादितम् ।

जयदेवैस्तु सेयं रूपकातिशयोक्तित्वेन व्यपदिष्टा । यथा—

"रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः" इति ।
( चन्द्रालोके )

समुदाहृतं चात्र तदेतद्विवरणकारैरप्पय्यदीक्षितैः—

वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली ।
अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ
तत्रत्यानां सुलभममृतं सन्निधानात् सुधांशोः ॥ इति ।
( कुवलयानन्दे )

तथा च भेदेऽभेदरूपातिशयोक्तौ विषयनिगरणपूर्वकाभेदप्रतिपत्तिरूपाध्यवसायस्य नितान्तमावश्यकत्वात् तद्रहितं तु पद्यमिदं कथङ्कारं तदुदाहरणतां भजतामित्यत्र सहृदया एव प्रमाणम् ।

यच्चात्र लक्षणं सङ्गमयद्भिर्मन्दरव्याख्याकृद्भिरभ्यधीयत—

"अत्र 'मन्दाररघुनन्दनयोरभेदातिशयोक्तिः' इति वचनं फलभूतवदान्यत्वातिशयगताभेदाध्यवसायविषयत्वाभिप्रायम् । अन्यथा त्वेकत्र फलयोरन्यत्र फलिनोरध्यवसाय इति वैरूप्यप्रसङ्गात्" ( सा० र० अर्था० ) इति ।

तदपि चिन्त्यमेव, उक्तरीत्या फलभूतवदान्यत्वातिशयगताभेदाध्यवसायविषयत्वविवक्षणेऽपि नेष्टं सिद्ध्यतीत्यहो कोऽयं लक्षणसङ्गमप्रकारः ?

यद्यप्यस्ति स्वतःसिद्धकविप्रौढोक्तिसिद्धयोरतिशययोरभेदाध्यवसायः; तथापि स विषयनिगरणपूर्वको न भवतीति कथमेतत् पद्यमत्रोदाहरणीयं स्यात् ?

ननु किमत्र विषयनिगरणेन ? अध्यवसायमात्रं त्वपेक्षितमस्त्येव । 'अध्यवसितप्राधान्ये त्वतिशयोक्तिरिति लक्षितत्वादिति चेन्न; अध्यवसितमध्यवसायः, स च

विषयनिगरणपूर्वकाभेदप्रतिपत्तिरूप एव तत्र विवक्षित इति कथमिति चेत्? यत्र—'निगीर्याध्यवसानम्' ( का० प्र० १०।१०० ) इत्यादौ विषयनिगरणस्य पृथक्पदनिर्दिष्टत्वं तत्राध्यवसानमित्यनेनाभेदप्रतिपत्तिमात्रं विवक्षितम। यत्र तु न तथा, यथा—अलङ्कारसर्वस्वसाहित्यदर्पणाद्युक्तलक्षणे, तत्र पुनर्विषयनिगरणपूर्वकत्वमपीति। निरुक्तं चापि ग्रन्थकृता—"विषयनिगरणेनाभेदप्रतिपत्तिरध्यवसायः" इति।

तथा च न केवलेनाभेदप्रतिपत्तिरूपाध्यवसायेनात्र किञ्चित् कृत्यम्, किन्तु विषयनिगरणपूर्वकेणैवेति तदप्यपेक्षितमेव[1]। अतश्च सिद्धं तदेतत्पद्यमत्रानुदाहरणीयमेवेति। तस्मात् तदेतन्मन्दरकृतसमर्थनमश्रद्धेयमेव।

कः पुनरत्रालङ्कार इति चेत्? सारोपामूलकं रूपकमपहाय किमत्र सेद्धं प्रभवति। लक्षणसङ्क्रमनप्रकारस्तु—जडध्युत्पन्नत्वादयो हि धर्मा विषयिगतत्वेन ज्ञाता एव विषये रामे निषिध्यन्ते। तेन विषयस्य रामस्य, विषयिणः कल्पतरोरपेक्षया आधिक्यं प्रतीयते, सर्वेऽपीमे धर्माः स्वस्य नैयून्यापादकतया दोषा इति। तथाहि—जडध्युत्पन्नत्वं स्वस्य मन्दबुद्धितामाख्याति। बुद्ध्यादयो हि गुणा जनकादनुवर्तन्त इति शास्त्रसिद्धम्। पलाशप्रकृतित्वं च निर्दयत्वं शंसति; "नो दया मांसभक्षिणः" इत्युक्तेः। एवमन्येऽपीति तद्रहितत्वं भूषणमेव।

अतश्च तादृशधर्मविशिष्टत्वेन ज्ञातात् कल्पतरोरपेक्षया रामभद्रस्य तादृशधर्मरहितत्वेनोपपादितस्याधिक्यं प्रतीयत इत्यधिकाभेदरूपकम्। 'त्वं सुरतरुः' इत्यभेदारोपस्तु स्फुट एव।

अथ कथं नाम कल्पतरोस्तादृशधर्मवैशिष्ट्यमिति चेत्; 'जडध्युत्पन्न' इति शब्दवाच्ययोर्मन्दबुद्धिजन्यत्वजलधि[2]जन्यत्वयोरेकशब्दप्रतिपाद्यत्वसम्बन्धेनाभेदाध्यवसाये कृते तत् सिद्ध्यति। एवमन्यत्रापीति न काचिद् विप्रतिपत्तिः।

यद्यपि रूपके नेमे भेदाः समुदाहृताः काव्यप्रकाशकारादिभिः; तथापि विच्छित्तिविशेषमादाय तद्भेदत्वेन परिगणने न काचित् क्षतिः। परिगणिताश्च तथा—

१. तदेतद्ग्रन्थव्याख्यातारौ चर्लावङ्कटसूरि-मधुसूदनमिश्रशर्माणावत्र मौनमूरीचक्रतुः। अलङ्कारसुधाकराख्यव्याख्या तु नास्माभिरुपलब्धा।

२. डलयोरभेदादित्यर्थः।

विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।
रूपकं तत् त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥ इति ।
( कुवलयानन्दे )

यदि पद्यमीदृशं निर्मीयेत, तर्हि प्रकृते उदाहरणीयं स्यात् । यथा—

जडव्युत्पन्नत्वं नहि न च पलाशप्रकृतिता
न यस्य च्छिद्राणि ह्यपि भवति नो वक्रिमगुणः ।
न वा नित्यं योगो भवति मधुपैर्नापि विटपै-
र्न कम्प्रत्वं सोऽयं सुरवरतरुः कोऽपि लसति ॥

अत्र श्रीरामो विलक्षणकल्पपादपत्वेनाध्यवसितः ।

अस्ति नाम काचन विप्रतिपत्तिरस्य भेदेऽभेदरूपातिशयोक्तिलक्ष्यत्वे ? दृश्यतामेतन्निर्विशेषं हि पद्यं समुदाहृतं रसगङ्गाधरे—

स्मृतापि तरुणातपं करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम् ।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी ॥

अत्र श्रीकृष्णो विलक्षणकादम्बिनीत्वेनाध्यवसितः ।

एवमलङ्कारचन्द्रिकायामपि—

अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः
कलङ्केनाश्लिष्टो न खलु परिभूतो दिनकृता ।
कुहूभिर्नो लिप्तो न च युवतिवक्त्रेण विजितः
कलानाथः कोऽयं कनकलतिकायां विजयते ॥

इत्युदाहृतं रूपकातिशयोक्ति( भेदेऽभेदरूपातिशयोक्ति )लक्ष्यत्वेन ।

सति चैवम्—'अयं कामधेनुः' इत्यस्य साध्यवसानालक्ष्यत्वेन, 'जडव्युत्पन्न' इति पद्यस्य भेदेऽभेदरूपातिशयोक्तिलक्ष्यत्वेन च ग्रन्थकृतां समुदाहरणं तु सहृदयतल्लजानां विचारसरणिमवगाहत इति शम् ॥

---

# राजस्थानीयसंस्कृताभिलेखेषु चारित्र्यम्

श्रीजयनारायण-असोपाः, इतिहासविभागे प्राध्यापकः, राजस्थानविश्वविद्यालयः, जयपुरम् ।

प्रायशो यस्य कस्यचिदपि भावस्य संस्कारः संस्कृतिरिति कथ्यते । इतिहासज्ञास्तु प्रशासनप्रणाली समाजसमीक्षा कला साहित्यं धर्मस्तथा दर्शनं च संस्कृतेरवयवा इति मन्यन्ते । किं जन्मन एव मनुष्यः संस्कृतो भवति ? न कथयामि किञ्चिदेतद्विषये, यतोऽप्रासङ्गिकं स्यादेतत् । विषयोऽस्ति 'राजस्थानीयसंस्कृताभिलेखेषु चारित्र्यम्' । अतः सप्तमशताब्दीतो द्वादशशताब्दीपर्यन्तं केचिद् राजस्थानीया यज्जातितया मनुष्यं संस्कृतं मेनिरे तद् वदाम्यहम् ।

( गुर्जर ) प्रतिहारवंशी कक्कुको यः शशास मड्डोदरे ( जोधपुरसमीपे ), स ईदृशं वचो ब्रूते —

वल्लकी काकलीगीतं शरच्चन्द्रश्च मालती ।
विनीता स्त्री सतां गोष्ठी कक्कुकस्य प्र (प्रि) याणि षट् ॥१॥
न्यायमार्गो गुरोर्व (र्भ) क्ति [:] पुत्रे स्नेहः कृतज्ञता ।
प्रिया वाग् (ङ्) नागरो वेषः कक्कुकस्य प्र (प्रि) याणि षट्[1] ॥२॥

चाहमानदुर्लभराजसुत इन्द[न्द्र]राज इत्थं क्षत्रियादर्श इव वर्ण्यते—

तस्मादनेकसमरार्ज्जितकीर्तिकोश-
श्चिन्तामणिः प्रणयिनां प्रणतो द्विज(1)तेः ।
यो योषितां तनुधरोऽभिनवो मनोभू-
र्भूषा भुवः समभव( त सु )त इन्द[न्द्र]राजः[2] [ ॥६॥ ]

चाहमाननृपतेर्वर्णनं यदत्रोद्ध्रियते, नास्ति केवलं मनोहारि; अपि तु साहित्यिकतयापि विरोधाभासालङ्कारस्य मनोरममुदाहरणम् —

यो वृद्धो न च वर्द्धितः शुचिरपि ज्येष्ठो न तापार्तिकृत्
सन्मूलोऽपि वृषानुगो धृतधनुः·········सचित्रक्रियः ।

---

1. Ghatiyala Ins of Ka E. G. IX P. 281
2. Pratapgarh Ins of C 999 V. S. E. G. X IV P. 185

प्रश्वीभृत्प्रभवो न गोपरतये सेव्योऽप्यविश्रान्तये
सोऽयं नन्दतु चाहमाननृपति[ः] प्रख्यातवंशश्चिरम्[1] ॥ ६ ॥

चारित्र्यनिर्माणस्य मूले दार्शनिकविचारोऽस्ति, यथात्र वर्ण्यते —

अप[ त्याद्या ] लोके सकलविषया दुःखविषया-
श्रिताया यः कायः प्रकृतिचपला यौवनकला ।
अचिन्त्यापत्संपद्धदि ( वि ) वेत्यविधिव-
न्नृणामेको धर्म्मः परमिह परत्रापि सुखदः[2] ॥ २२ ॥

चारित्र्यनिर्माणस्य साधनान्यपि लभ्यन्ते सौभाग्येन पूर्वोक्ताभिलेखे वाक्पति-राजपुत्रसिंहराजस्य वर्णने —

"सत्सङ्गतिः कृतनयो नयसूत्रयुक्तः[3]"

दानमपि चरित्रताया महान् गुणः प्रदर्शितः परमारभोजस्याभिलेखे, तथा तत्पृष्ठभूमौ संसारस्य दर्शनमपि वर्ण्यते—

वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग(ग्र)जलविदु(बिन्दु)समा नराणां
धर्म्मः सखा परमहो परलोकयाने ॥ ३ ॥
भ्रमत्संसारचक्राग्रधाराधारामिमां श्रियम् ।
प्राप्य ये न ददुस्तेषां पश्चात्तापः परं फलम्[4] ॥ ४ ॥

भोजो न केवलं दानं चरित्रस्य गुणं मनुते; अपि तु परदानस्यालोप्यतामपि चरित्रगुणेऽन्तर्भावयति —

कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥[5]

---

1. Kinasaiya Ins of Dad Chach of V. S. 1056 E. I. XII P. 59.
2. Ibid P. 61.
3. Ibid. P. 59.
4. Banswara Ins of Bhoja of V. S. 1076 E. I XI P. 182.
5. Ibid, P. 183.

कतिपयैरुदारैर्गुणैर्विग्रहराजस्तु नररूपधृन्माधव एव वर्ण्यते। चारित्र्यस्यैवैष महिमा यथोद्धरणेन प्रकटीभवति —

प्रदानसौ( शौ )र्यादिगुणैरुदारै-
र्यसो( शो ) ययौ यस्य विजित्य लोकान् ॥ १५ ॥
द्विजिह्वरिपुवाहनो ललनकान्तारामान्वितः
कुलोच्चयकृतोन्नतिर्विधृतचारुलक्ष्मीवपुः।
स्वपौरुपधृतावनिर्वलनिर्विष्टचक्रो महान्
बभूव नृवरोत्तमः स नररूपधृन्( ङ् ) माधवः[1] [ ॥१६॥ ]

परमारधन्धुकस्य चारित्र्यमहिमा इत्थं गीयते —

अस्यापि कीर्तिः सुरराजलोके
प्रगीयते वै सुरकिन्नरीभिः।
वीणावीष्ठ(ट)करजाङ्गुली······
[ रलं ] कृताभिः ॥६॥
येनाहृतासौ( शौ )र्यवलेन लक्ष्मी ( ँ )
व्याख्याप्य नामं( म ) परसैन्यमध्ये[2] ॥

अस्यैव धन्धुकस्य पुत्रस्य पूर्णपालस्य गौरवमप्यमीभिरेव गुणैर्गीयते —

कनककर्णिकभूषितगण्डया
क(सु)कुचदेशनिवेशितवीणया।
विबुधराजकुले (ऽ)मरकन्यया
सदसि यस्य यशः परिगीयते ॥ ९ ॥
हत्वा येन रणे रिपु( पून् ) सुबहुशः ······[ के ]
विक्रान्ता मदसा( शा )लिनो वरगजा नद्धाः स्वके मन्दिरे।

---

1. Purugpalas Vasantgadh Ins. of V. S. 1099 E. I. IX P. 13-14.
2. Ibid P. 13.

पूर्णपालकुलप्रदीपनृपतौ सौ[ शौ ]र्यव्रते धार्मिके
अत्र श्रीपरमारवंशतिलके राज्यं स्थिरं शासति ॥[1]

एतेऽभिलेखा मुख्यरूपेण क्षत्रियराजभिर्लेखिताः। अत एतेषु क्षत्रियाणां चरित्रमेव प्रधानम्, यत्र तत्र च लभ्यते ब्राह्मणवश्यशूद्राणां चरित्रविषयकं वर्णनम्। उद्धराम्यधो वटपुरवासिब्राह्मणानां चरित्रम्—

श्रुतिमन्त्रदमक्षोभ्यां( भ्यं ) षडङ्गावर्तसंकुलम्।
वेदार्णवं द्विजाः सम्यग् यत्र तीर्त्वाप्यगर्विताः[2] ॥११॥

श्रीगुदकूर्चाभिधाननिवासिब्राह्मणेभ्यो यच्छासनं दत्तम्, तस्मिन् त इत्थं वर्णिताः सन्ति —

"यजनादिषट्कर्मजपस्वाध्यायध्यानानुष्ठानविधायिने इतिहासपुराणरामायणभारतपदवाक्ययाज्ञवल्क्यकात्यायनभ( भृ )ग्वङ्गिरोमार्क( र्कण )डेयभट्टदर्शु( र्श )नादिषड्दर्शनशा[ स्त्रा ]भिरताय आवसथ्याग्निहोत्राग्निष्टोमसौत्रामणिपशुबं( बन् )धचातुर्मास्यादियजु( जुः )क्रियानिरताय निविडतरकल्मषग्र( ग्रन् )थिभिदे ( वे )दवेदाङ्गविदे (।) राकाशशो( शाङ्क )कविशदविस्तृतश्लाघ्यश्लोकाय समग्रश्रीवा( ब्रा )ह्मणलोकाय।"[3]

अस्मिन्ननुच्छेदे चरित्रेणाधिकं कर्मकाण्डाध्ययनयोर्वर्णनमस्ति, परन्तु "निविडतरकल्मषग्रन्थिभिदे" इति पदेन ज्ञायते यत्ते कर्मफलजातपापस्य ग्रन्थिभेदने समर्था आसन्। न संभाव्यतेऽयं तस्य जनस्य यः स्वयमपि कल्मषग्रन्थिसंयुक्तः स्यात्; जपोऽपि तेषां वर्णने निहितोऽस्ति। ज्ञायतेऽनेन यत्ते ब्राह्मणा ज्ञानकर्मभक्तिकर्मकाण्डप्रधाना आसन्। उपरितनेन ज्ञायते ब्राह्मणचरित्रादर्शः।

वैश्यचरित्रसम्बन्धे त्वत्यल्पसामग्री उपलब्धा अस्ति। धान्धलदेवस्याभिलेखे लिखितम्—

1, Ibid.

2. ıbid P. 14.

3. Chahuhaha Ratrapalas's Sevadi Ins. of V. S. 1176 EI. XI P. 311.

आसीद् धर्कतवंशमुख्य उसभः श्राद्धः पुरा शुद्धधी-
स्तद्गोत्रस्य विभूषणां(णं) समजनि श्रेष्ठि(ष्ठी) स पार्श्वाभिधः।
पुत्रौ तस्य बभूवतुः क्षितितले विख्यातकीर्त्ति( ँ )भृशं
पूमल्ह (:) प्रथमो व(ब)भूव सगुणी रामाभिधश्चापरः॥

तथान्यः—

श्रीसर्वज्ञपदार्चने कृतमतिर्दाने दयालुर्मुहु-
राशादेव इति क्षितौ समभवत् पुत्रोऽस्य धान्धाभिधः।
तत्पुत्रो यति सम्प्रतिः गीसाकनामा सुधीः
शिष्टाचारविशारदो जिनगृहोद्धारोद्यतो योऽजनि॥ २॥
कदाचिन( द् ) यदा चित्ते विचिन्त्य चपलं धनम्।
गोष्ठ्या च रामगीसाभ्यां कारितो रङ्गमण्डपः॥ ३॥[1]

अस्मिन्नभिलेखे शुद्धधीः, सगुणी, दाने दयालुः, सुधीः, शिष्टाचारविशारदस्तथा सर्वज्ञपदार्चने कृतमतिरिति विशेषणानि प्रयुक्तानि। एतैर्ज्ञायते यद् भक्तिर्विचार-शुद्धिः शिष्टाचारस्तथा दानं वैश्यपुत्राणां चरित्रगौरवमित्यादर्श आसीत्।

आल्हणदेवस्याभिलेखे प्राग्वाटवंशीयामात्य इत्थं वर्ण्यते—

प्राग्वाटवंशे धरणिग्गनाम्नः सुतो महामात्यवरः सुकर्मा।
व(ब) भूव दूताः(तः) प्रतिभानिवासी लक्ष्मीधरः श्रीकरणे नियोगी[2] ॥२१॥

अस्मिन्नभिलेखे 'सुकर्मा' तथा 'प्रतिभानिवासी' इति द्वे विशेषणे प्रयुक्ते। अत उपरिलिखितगुणौ वैश्यामात्ये परिलक्षितौ वैश्यराज्यकर्मचारिणां चारित्रस्यादर्शभूताविति मे मतिः।

शूद्रेष्वपि 'सत्' इति विशेषणस्योपादानं परिलक्षणीयं वत्सराजाभिलेखे—

तेनावनीशेन कृताभिरक्षैः सद्ब्राह्मणक्षत्रियवैश्यशूद्रैः।
समेतमेतत्प्रथितं पृथिव्यामूकेशनामास्ति पुरं गरीयः[3] ॥ ९॥

---

1. Dhandhala's Belar Ins. of V. S. 1235.
   Nahar—Jain Ins. Pr. I P. 219.
2. Alhang's Nadol Ins of V. S. 1218 Nahar Jain Ins pr I P. 209.
3. Vatsraja's Osian Ins. of V. S. 1013. Nahar—Jain Ins. Pr I P. 193.

ब्राह्मणक्षत्रियवैश्यशूद्राणां चरित्रविषये यत्किमप्युपलब्धं तद् वर्णयित्वा वर्णयामि पौरजनचरित्रादर्शम्। राष्ट्रकूटधवलस्याभिलेखे वर्ण्यते—

धौतकलधौतकलशाभिरामरामास्तना इव न यस्याम्।
सत्यपरेऽप्यपहासः सदा सदाचारजनतायाम्॥
समदमदनालीलालायाः प·········नाकुलाः
कुवलयदृशां संदृश्यन्ते दृशस्तरलाः परम्।
मलिनितमुखा यत्रोद्धूताः परं कठिनाः कुचा
निबिडरचना नी [वी]बन्धाः परं कुटिलाः कचाः[1]॥

अत्र हस्तिकुण्डिकाजनेषु सदाचारस्यादर्श उपलब्ध इति वर्णितम्।
वटपुरपौराणां वर्णनं विशिष्टमस्ति—

ये सर्वे पालयन्ते नगरहितरता नीतिमन्तः प्रशान्ता
देवान् प्रियान् यजन्ते कनकधनमहीवस्त्ररत्नादिदानैः।
ख्यातिर्येषां च नित्यं तृ(त्रि)भुवनवलये सद्गुणैरेव नीता-
स्ते[ऽ] स्मिन् पौराः समस्ताः सकलजनहिता भानवे भक्तिमन्तः[2] ॥२४॥

पौराणां चरित्रवर्णनं कृत्वा लिखामि ये गुणाः स्त्रीषु द्रष्टव्या अमन्यन्त तात्कालिकैः पुरुषैः। वटपुराभिलेखे धन्धुकस्य पत्न्यामेते गुणा वर्णिताः—

अस्यापि भार्यामृतदेवी त्ता(ना)म्नी।
रूपेण सी (शी)लेन कुलेन युक्ता॥ ७॥[3]

शब्दान्तरेण त एव गुणा विग्रहराजस्य पत्न्यां परिदृष्टा लेखकेन—

प्रोत्फुल्लसितकमलमुखां करतलसुकुमारपङ्कजनिभा[ङ्ग]ीम्।
श्रियमेव कुलजां राज्ञी [ ं ] लाहिणीमूढवांसह (वान् सः) ॥१७॥

---

1. Bijapur Ins. havalaD of Hasti Kuneli. of V. S. 1053 E. I. X. P. 22.
2. Purhapala's Vasantgadh Ins. of V. S. 1099 E. I. IX P. 14.
3. Ibid P. 13.

भार्यां स चावाप्य गुणै[:] समेतां चित्तेप्सितां वै बुभुजे च भोगम् ।
सापि प्रियं प्राप्य पतिं तु रेमे यद्वच्छची(ची)न्द्रेण समं च रेमे ॥१८॥[1]

सा एव लाहिणी पूर्वम् "तामरसैर्विहीनाम्"[2] कथिता, अतस्तदपि चरित्र-लक्षणे लक्षणीयम् ।

किं स्त्रियस्तत्कालेऽवरोधनेष्ववरोधिता आसन ? कुमारपालस्य चित्रकूटाभिलेखे पश्यामस्ता वने विचरन्त्यः क्रीडासन्निलीनाः—

शुभे यद्वने शाखिशाखान्तराले
प्रियाः क्रीडया सन्निलीना निकामम् ।[3]

एवमत्र निबन्धे ब्राह्मणक्षत्रियवैश्यशूद्राणां चरित्रसम्बन्ध्यादर्शाः पृथक् पृथक् प्रकटीकृताः सन्ति, परन्तु सदाचारगुणः समानः सर्वेषु समवर्तत । स्त्रीणां गुणेष्वपि यद् विशिष्टरूपेण वर्णितः, शीलं सर्वासां कृते समानादर्शतया मतमिति भाति । लभ्यते चायं निष्कर्षो यत् सदाचारः सर्वस्य, वैश्यकर्मणि भक्ति-दानयोर्महिमाऽऽसीत्, क्षत्रियाणां समाचरणे तदुपरि शौर्यस्य तथा साहित्यसङ्गीतादि-ललितकलानां महत्त्वमासीत्, ब्राह्मणानामाचारे तु धर्मदर्शनादीनां तथा कर्म-काण्डस्य योजना आसीत् । साधारणधर्मेण सहेत्थं प्रतिवर्णं विशेषधर्मा अपि निरूपिताः ॥



1. Ibid P. 14.
2, Ibid P. 13.
3, Chalukya Kumarapala's Chitorgadh Ins. of V. S. 1207. E I II. P. 423.

# प्रत्यक्षज्ञानमीमांसा

श्रीरामपाण्डेयः, वा० सं० वि०-वि०, न्यायवैशेषिकाध्यापकः।

( २० व० २ अ० अनुवृत्तम् )

ननु सुरभि चन्दनमिति ज्ञाने वृत्तिसौरभांशरूपोपाध्योरेकदेशस्थत्वात् सौरभस्य योग्यविषयत्वाच्चातिव्याप्तिरिति वाच्यम्; सौरभस्य चक्षुरिन्द्रियायोग्यत्वेन तत्तदिन्द्रियघटितयोग्यत्वघटितस्य विवक्षितस्य लक्षणस्य तत्रासंगमनेनातिव्याप्तेरभावात्।

ननु पर्वतो वह्निमानित्यादिज्ञानं सन्निकृष्टपर्वतांशेऽपि न प्रत्यक्षम्, प्रत्यक्षत्वे स्वाश्रयाश्रयत्वसम्बन्धेन साङ्कर्यरूपबाधकस्य सत्त्वाद् असन्निकृष्टपर्वतादिविषयकपर्वतो वह्निमानित्याद्यनुमितिनिष्ठपर्वतादिपक्षाद्यपरोक्षतायाः पर्वतादिभिः सह सन्निकर्षाभावरूपबाधकसत्त्ववत्। न च हेत्वसिद्धिः; परोक्षेऽपि ज्ञाने तदभ्युपगमे प्रसिद्धजातिबाधकस्य साङ्कर्यस्य प्रसङ्गाज्जातित्वानुपपत्तेरेव बाधकत्वात्।

न च तवापि ज्ञानस्य परोक्षत्वे पर्वतं पश्यामीत्यनुभवानुपपत्तिस्तस्य पर्वतगोचरलिङ्गपरामर्शादिप्रत्यक्षविषयत्वात्।

ततश्च तज्ज्ञाने प्रत्यक्षलक्षणातिव्याप्तिरिति चेन्न; साक्षात्त्वादेर्जातित्वाभ्युपगमे हि तदनुपपत्तिर्बाधिका स्यात्तदेव नास्ति; जात्युपाध्युदासीनस्य धर्ममात्रस्यैव साक्षात्त्वादेरभ्युपगमात्, जातित्वोपाधित्वलक्षणस्य सकलप्रमाणागोचरतयाऽप्रामाणिकत्वात्, घटोऽयमित्यादिप्रत्यक्षं तु घटत्वादीनामस्तित्वे मानम्, न तु जातित्वे। ब्रह्मभिन्नसकलप्रपञ्चस्यानित्यत्वेन समवायसम्बन्धस्यासिद्ध्या च नित्यत्वसमवेतत्वघटितजातित्वस्य घटत्वादावसिद्धेश्च। फलतस्तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।

विषयगतं प्रत्यक्षत्वं तु प्रमातृचैतन्याभिन्नत्वम्। ननु प्रमात्रभेदोऽन्तःकरणविशिष्टचैतन्याभेदः। स च न विषयस्य प्रत्यक्षत्वव्यवहृतिप्रयोजको घटादेर्जडस्य तदभेदायोगात्। न च प्रमात्रभेदज्ञानविषयत्वं विषयस्य प्रत्यक्षत्वम्। अन्तःकरणस्ये-

न्द्रियद्वारा घटादिदेशनिर्गमनेन तदवच्छिन्नस्य प्रमातुर्विषयचैतन्याभिन्नतया घटः सन्निति विषयचैतन्याभेदप्रत्ययस्य तदभेदप्रत्ययत्वाद् अनुमास्थले च प्रमातुर्विषयचैतन्याद् भिन्नतया वह्न्यादौ तदभेदप्रत्ययस्य प्रमात्रभेदप्रत्ययत्वाभावान्नातिप्रसक्तिरिति वाच्यम्, विषयचैतन्यस्य तदा प्रमात्रभेदेऽप्यहं मनुष्य इतिवदहं घट इति प्रतीत्यापत्त्या अहमिमं पश्यामीति प्रमातृभेदप्रत्यक्षविरोधेन च घटः सन्नित्यादिप्रतीतेस्तदभेदविषयत्वाभावादिति चेन्न; प्रमातृसत्तातिरिक्तसत्ताकत्वाभावस्यैव प्रमात्रभेदत्वेनाङ्गीक्रियमाणत्वात्। एवञ्च विषयस्य घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अस्वीकारात्। प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नातिरिक्तेति घटादेरपरोक्षत्वं सिद्धम्।

ननु घटादिनिष्ठप्रत्यक्षत्वप्रकारकव्यवहारप्रयोजकश्चैतन्यसत्तातिरिक्तसत्ताकत्वाभाव एवाङ्गीक्रियताम्, किमर्थं चैतन्ये प्रमातृत्वविशेषणमिति चेन्न; अनुमीयमानेऽपि तद्व्यवहारप्रसङ्गात्, तस्यापि चैतन्यसत्तातिरिक्तसत्ताशून्यत्वात्, तत्प्रवेशे त्वनुमित्यादिस्थलेऽन्तःकरणस्य वह्न्यादिदेशनिर्गमनासम्भवेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादिसत्तायाः प्रमातृसत्तातोऽरिक्ततया अतिव्याप्तेर्निरासात्।

न च धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्तानतिरिक्तत्वेन धर्माधर्मयोः प्रत्यक्षत्वापत्तिरिति वाच्यम्, विषये योग्यत्वविशेषणदानेनादोषात्।

नन्वेवमपि रूपावच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्याभिन्नत्वेन रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नत्वे परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणादिसत्तायाः प्रमातृसत्तानतिरिक्ततया रूपी घट इति प्रत्यक्षकाले घटगतपरिमाणादेरपि प्रत्यक्षत्वापत्तिरिति चेन्न; तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात्। रूपाकारवृत्त्यवसरे परिमाणाद्याकारवृत्त्यभावेन परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेनातिप्रसक्तेरभावात्।

नन्वेवं वृत्तावव्याप्तिस्तस्याः स्वगोचरत्वे मानाभावाद् वृत्त्यन्तरस्वीकारेऽनवस्थानाच्च तत्र स्वाकारवृत्त्युपहितत्वघटितलक्षणस्यासंघटनात्। न च वृत्तिः स्वविषया

ज्ञानत्वाद् ब्रह्मस्वरूपनित्यज्ञानवदित्यनुमानं तत्र मानमिति वाच्यम्; वृत्तौ ज्ञानत्वाभावेन हेतोः स्वरूपासिद्धत्वात्। वृत्तिलक्षणज्ञानत्वविवक्षायां दृष्टान्ते साधनवैकल्यात्, उभयसाधारणस्य च ज्ञानत्वस्याभावात्। ज्ञानपदवाच्यत्वमुभयसाधारणमिति चेन्न; चक्षुरादेरपि करणव्युत्पत्त्या तत्पदवाच्यत्वेन व्यभिचारात्। वृत्तौ ज्ञानपदस्य गौणत्वेन तत्पदवाच्यत्वाभावाद् आत्मत्वस्योपाधित्वाद् वृत्तिर्न स्वविषया जडत्वाद् घटवदित्यनुमानेन प्रतिरोधाच्च।

किञ्च, वृत्तेः स्वविषयत्वे आत्मवत्स्वप्रकाशत्वापत्तिः, न चेष्टापत्तिरात्मैव स्वप्रकाश इति सिद्धान्तभङ्गापत्तेः।

न च वृत्तिरपि स्वप्रकाशा, स्वसत्तायां प्रकाशाव्यभिचारित्वावगमाद् आत्मवदिति वाच्यम्, सुखादौ व्यभिचारात्। न च तत्रापि इष्टं स्वप्रकाशत्वम्, तत्र तदाकारवृत्त्यभ्युपगमात्। स्वप्रकाशात्मसम्बन्धेनैवान्येषां प्रकाशोपपत्तावनेकस्वप्रकाशत्वकल्पने गौरवात्, आत्मैवास्य ज्योतिरिति श्रुतिविरोधाच्चेति चेन्न, अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्यसत्ताभिन्नसत्ताकत्वस्य तत्रापि सत्त्वात्। तथा चान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्यभ्युपगमात्तत्रापि तल्लक्षणस्य नाव्याप्तिः।

न चान्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाङ्गीक्रियमाणे केवलसाक्षिवेद्यत्वं तेषां कथं सङ्गतं स्यादिति वाच्यम्; इन्द्रियानुमानादिप्रमाणव्यापारं विनैव साक्षिविषयत्वस्य केवलसाक्षिवेद्यत्वाभ्युपगमादिति।

चैतन्याभिव्यञ्जकवृत्तिजनने संयोगसंयुक्ततादात्म्यादीनां सम्बन्धानामावश्यकत्वम्। अन्तःकरणवृत्तिश्चतुर्धा—संशयो निश्चयो गर्वः स्मरणमिति। एवं रीत्या एकमप्यन्तःकरणं वृत्तिभेदाद् मन इति बुद्धिरिति अहङ्कार इति चित्तमिति च व्यवह्रियते। यथा चोक्तम्—

मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्।
संशयो निश्चयो गर्वः स्मरणं विषया इमे॥

प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकञ्चेति। तत्र वैशिष्ट्यावगाहिज्ञानं सविकल्पकम्। वैशिष्ट्यावगाहित्वस्येच्छादावपि सत्त्वादतिव्याप्तिः, अतस्तद्वारणाय ज्ञानमिति। ज्ञानत्वस्य निर्विकल्पकेऽपि सत्त्वादतिव्याप्तिः, अतस्तद्वारणाय वैशिष्ट्या-

वगाहीति। पुस्तकमहं जानामीत्यादिज्ञानं सविकल्पकम्। संसर्गानवगाहि ज्ञानं निर्विकल्पकम्। सोऽयमश्वः, तत्त्वमस्यादिवाक्यजन्यं ज्ञानं निर्विकल्पकम्।

ननु इन्द्रियाजन्यत्वादिदं ज्ञानं न प्रत्यक्षमपि तु शाब्दमिति चेन्न, प्रत्यक्षत्वे इन्द्रियजन्यत्वस्यातन्त्रत्वात्। योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषय-चैतन्येन सहाभेदस्यैव प्रत्यक्षज्ञानप्रयोजकत्वाच्च। तथा च सोऽयमश्व इति वाक्य-जन्यज्ञानस्य सन्निकृष्टविषयत्वेन बहिर्निर्गतान्तःकरणवृत्त्यभ्युपगमेन अश्वावच्छिन्नचैत-न्यस्य वृत्त्यवच्छिन्नचैतन्याभेदेन प्रत्यक्षत्वम्। इन्द्रियजन्यमिन्द्रियाजन्यञ्चेति प्रकारा-न्तरेणापि प्रत्यक्षं द्विविधम्। तत्रेन्द्रियाजन्यं सुखादिप्रत्यक्षं मनस इन्द्रियत्वनिरासात्।

घ्राणरसनचक्षुःश्रोत्रत्वगात्मकानीन्द्रियाणि पञ्च निखिलेन्द्रियाणि स्वस्वविषय-संयुक्तान्येव प्रत्यक्षमुत्पादयन्ति। तत्रापि स्वस्थानस्थितान्येव घ्राणरसनत्वगात्म-कानीन्द्रियाणि गन्धरसस्पर्शविषयकं ज्ञानमुत्पादयन्ति। चक्षुःश्रोत्रे स्वत एव विषय-देशमुपसर्पतः स्वस्वविषयं बोधयतश्चेति।

## न्यायमतम्

प्रत्यक्षशब्दो हि प्रमाणे विषये ज्ञाने च प्रयुज्यते। तथा घटादौ प्रत्यक्षं प्रमाणम्, प्रत्यक्षो घटादिः प्रत्यक्षं घटादिज्ञानमित्यादि। तत्र प्रमाणे चक्षुरादौ प्रतिगतमक्षमिति व्युत्पत्त्या प्रवर्तते प्रतिगतम्=विषयं प्रतिगतम्, विषयसन्निकृष्टमिति यावत्।

प्रतिगतमक्षं यं स प्रत्यक्ष इति व्युत्पत्त्या प्रत्यक्षशब्दो विषये प्रवर्तते। प्रति-गतमक्षं यस्मै तत्प्रत्यक्षमिति व्युत्पत्त्या प्रत्यक्षशब्दो ज्ञाने प्रवर्तते। तत्र प्रत्यक्षज्ञानं द्विविधम्—जन्यं नित्यञ्च। जन्यं जीवगतं नित्यं चेश्वरगतम्। तदुभयसाधारणलक्षणं ज्ञानाकरणकज्ञानत्वम्, यत्किञ्चित् प्रत्यक्षवृत्त्यनुमित्यवृत्तिजातिमत्त्वं वा। अनुमित्यादेर्व्याप्त्यादिज्ञानकरणकत्वेन न तत्रातिव्याप्तिः। ईश्वरज्ञानस्य च नित्यत्वेन निष्करणकतया सुतरां ज्ञानाकरणकत्वान्नाव्याप्तिः। द्वितीयज्ञानपदोपादानात् ज्ञाना-करणके घटादौ नातिव्याप्तिः। कारणत्वमुपेक्ष्य करणत्वप्रवेशेन सविकल्पकप्रत्यक्षस्य निर्विकल्पकप्रत्यक्षात्मकज्ञानकारणकत्वेऽपि नाव्याप्तिः।

द्वितीयलक्षणे वृत्तित्वान्तभागनिवेशाद् घटादौ नातिव्याप्तिः। अवृत्तित्वान्त-भागनिवेशाच्चानुमित्यादौ नातिव्याप्तिः। जातिपदोपादानाच्च यत्किञ्चित्प्रत्यक्षघटाद्यन्तर-त्वमादाय घटादौ नातिव्याप्तिः। जन्यप्रत्यक्षमात्रस्य लक्ष्यत्वे इन्द्रियार्थसन्निकर्षोत्पन्नं

ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणं बोद्धव्यम्। जन्यप्रत्यक्षप्रमाया लक्ष्यत्वे इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिज्ञानं प्रत्यक्षमिति लक्षणं बोद्धव्यम्। जन्यसविल्पकमात्रस्य लक्ष्यत्वे उक्तलक्षणेऽव्यपदेश्यमपि लक्षणकुक्षौ प्रवेश्यम्। एतदेवाभिप्रेत्य न्यायदर्शने महर्षिणा गौतमेनोक्तम्—

"इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति।

व्यवसायात्मकमित्यवधारणात्मकमित्यर्थस्तेन न यत्किञ्चिदिदमित्याकारके विशेषानवधारणज्ञानेऽतिव्याप्तिः।

## जन्यप्रत्यक्षविभागः

जन्यप्रत्यक्षं घ्राणादिप्रमाणानां षड्विधतया घ्राणजं रासनं चाक्षुषं त्वाचं श्रावणं मानसमिति षड्विधम्। तेषु प्रत्येकं द्विविधम्—निर्विकल्पकं सविकल्पकञ्चेति। तत्र विशेष्यताप्रकारतासंसर्गताविलक्षणविषयताशालि ज्ञानं निर्विकल्पकम्, निर्गतो विविधः कल्पो विशेष्यविशेषणसंसर्गात्मको विषयो यस्मात्तन्निर्विकल्पकमिति व्युत्पत्तेः। यथोक्तम्—

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥

यथा बालमूकादिज्ञानं बालमूकादिभिः शब्देनाप्रकाश्यम्, तथैव निर्विकल्पकमपि शब्देनाप्रकाश्यम्। अन्तरं केवलमेतावदेव यत्प्रथमेऽभिलापकशब्दसंभवेऽपि ज्ञातुस्तज्ज्ञानाभावान्न शब्दतो बालादिज्ञानप्रकाशो द्वितीये चाभिलापकशब्दाभावान्न तथा। तत्तज्ज्ञानाभिलापो हि तत्तज्ज्ञानसमानाकारज्ञानार्जनक्षमेण शब्देन भवति। यथा दण्डप्रकारकपुरुषविशेष्यकज्ञानस्य 'दण्डी पुरुषः' इति शब्देनाभिलापः। शब्दाच्च निर्विकल्पकज्ञानसमानाकारकं ज्ञानं न सम्भवति, निर्विकल्पकस्य च विशेष्यतादित्रिविधविषयताशून्यत्वात्, शब्दस्य च तादृशविषयताशालिबोधस्यैव जनकत्वात्, शब्दादपि निर्विकल्पको बोध इति केनाप्यनङ्गीकारात्।

ननु प्रमाणाभावान्निर्विकल्पकं नाभ्युपेयमिति चेन्न; विशेषणज्ञानाभावदशायां विशिष्टबुद्धेरुत्पत्तिवारणाय विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणताया अवश्य-

मभ्युपेयतया तन्मूलकानुमानस्यैव निर्विकल्पके प्रमाणत्वात्। तथाहि—गौरिति विशिष्टज्ञानं गोत्वविषयकज्ञानजन्यं गोत्वप्रकारकज्ञानत्वात्। यज्ज्ञानं यत्प्रकारकं तत्तद्विषयकज्ञानजन्यमिति व्याप्तेः। तथा च गौरिति ज्ञानात् प्रागङ्गीकरणीयं गोत्वज्ञानं निर्विकल्पकमेव मन्तव्यम्। ननु निर्विकल्पकस्य गोत्वाद्यात्मकविशेषण-विशेष्यकत्वमेवाङ्गीकार्यम्, न तु गवाद्यात्मकविशेष्यविषयकत्वमपि। तथा च विशिष्टज्ञानात् प्राग् विशेष्यविशेषणयोः संसर्गागोचरं विशेष्यविशेषणस्वरूपमात्रग्राहि निर्विकल्पकं भवतीति प्रसिद्धिर्निराधारेति चेन्न; विशिष्टबुद्धिं प्रति विशेषणज्ञानस्येव विनिगमनाविरहेण विशेष्यज्ञानस्यापि कारणताया आवश्यकत्वात्। विशेषणज्ञाना-भाव इव विशेष्यज्ञानाभावेऽपि विशिष्टबुद्धेरनुत्पत्तेः। किञ्च, गौरित्यादिसवि-कल्पकप्रत्यक्षं गोत्वप्रतियोगिकगवानुयोगिकसमवायविषयकं भवति, तत्प्रतियोगिक-तदनुयोगिकसाक्षात्कारं प्रति च तत्प्रतियोग्यनुयोगिविषयकसाक्षात्कारः कारणम्। अन्यथा वायुवनस्पत्योः संयोगस्यापि साक्षात्कारापत्तेः। एवञ्च निर्विकल्पकं यदि विशेषणमात्रविषयकं स्यात्तदा विशेष्यात्मकानुयोगिसाक्षात्काररूपकारणाभावेन विशेष्यविशेषणयोः सम्बन्धगोचरः सविकल्पकात्मकः साक्षात्कारो न स्यात्, अतो निर्विकल्पकस्य विशेषणविशेष्योभयस्वरूपावगाहित्वमावश्यकम्।

वस्तुतस्तु गौरिति सविकल्पकज्ञानात् पूर्वं नहि गोगोत्वमात्रविषयकनिर्वि-कल्पकम्, किन्तु गोगोत्वसमवायैतत्त्रितयविषयकमेव, समवायग्राहकस्य चक्षुः-संयुक्तविशेषणतासन्निकर्षस्य गोगोत्वग्राहकसन्निकर्षयोरिव निर्विकल्पकपूर्वमक्षुण्णत्वात्। तज्ज्ञानप्रतिबन्धककल्पनं विना तज्ज्ञानप्रतिरोधासंभवात्। प्रतिबन्धककल्पनस्य चानावश्यकत्वाद् गौरवाच्च कर्तुमशक्यत्वात्। अतो गवादिना सह चक्षुःसन्निकर्षा-नन्तरं विशेष्यतादित्रिविधविषयताविलक्षणविषयताशालिगोगोत्वसमवायविषयक-निर्विकल्पकप्रत्यक्षस्योत्पत्तिरेव गरीयसी।

ननूक्तानुमानेन निर्विकल्पकसिद्धिरसंभवा, तन्मूलभूताया विशिष्टबुद्धिं प्रति विशेषणज्ञानत्वेन हेतुताया असिद्धत्वात्। न चोक्तकारणत्वाभावे दण्डस्याज्ञानदशाया-मपि दण्डी पुरुष इति बुद्ध्यापत्तिरिति वाच्यम्, विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्यावश्यकक्लृप्तकारणताकत्वेन दण्डाज्ञानदशायां तादृशकारणाभावादेवोक्तापत्त्यसंभवादिति चेन्न; विशिष्टबुद्धिं प्रति विशेषणज्ञानस्या-

हेतुत्वेऽपि विशिष्टप्रत्यक्षं प्रति विशेषणज्ञानस्य कारणताया आवश्यकतया तन्मूलकानुमानेनैव निर्विकल्पकसिद्धेः। न चायमपि कार्यकारणभावोऽप्रामाणिक इत्याशङ्क्यम्; रजतत्वादिप्रकारकशुक्त्यादिविशेष्यकभ्रमात्मकप्रत्यक्षोपपत्तये ज्ञानलक्षणसन्निकर्षस्यावश्यमभ्युपेतव्यत्वात्, तस्य च तद्विषयकज्ञानत्वेन तत्प्रकारकप्रत्यक्षं प्रति कारणत्वात्। एवं जातिमान् घट इत्याकारकस्य घटत्वनिष्ठजातित्वावच्छिन्ननिरवच्छिन्नद्विविधप्रकारताकप्रत्यक्षस्यानुरोधेन तन्निष्ठनिरवच्छिन्नप्रकारताकप्रत्यक्षं प्रति तन्निष्ठनिरवच्छिन्नविषयताकज्ञानत्वेन तन्निष्ठतद्धर्मावच्छिन्नप्रकारताकप्रत्यक्षं प्रति तन्निष्ठतद्धर्मावच्छिन्नविषयताकज्ञानत्वेन कारणताया अवश्यमङ्गीकार्यतया गोत्वादिनिष्ठनिरवच्छिन्नप्रकारताकप्रत्यक्षकारणत्वेन गोत्वादिनिष्ठनिरवच्छिन्नविषयताकज्ञानात्मकनिर्विकल्पकसिद्धेरपरिहार्यत्वात्।

तदित्थं विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य, विशिष्टप्रत्यक्षं प्रति विशेषणज्ञानस्य, तन्निष्ठनिरवच्छिन्नप्रकारताकप्रत्यक्षं प्रति तन्निष्ठनिरवच्छिन्नविषयताकज्ञानस्य च स्वीकरणीयकारणताश्रितानुमानैर्निर्विकल्पकसिद्धिरावश्यकी।

## निर्विकल्पकस्यातीन्द्रियत्वम्

ननु निर्विकल्पकस्यास्तित्वमनुपलब्धिबाधितम्, यतो हि यदि निर्विकल्पकं स्यात्तर्हि सविकल्पकमिव तदप्युपलभ्येत, न चोपलभ्यते, तस्मान्नास्तीति चेन्न; योग्यानुपलब्धेरेव बाधकत्वात्, अन्यथाऽतीन्द्रियवस्तुमात्रस्योच्छेदापत्तेर्निर्विकल्पकस्य चातीन्द्रियत्वेनैवानुपलब्धेः। न चातीन्द्रियत्वं नेन्द्रियासन्निकृष्टत्वं सविकल्पक इव निर्विकल्पकेऽपि मनःसंयुक्तसमवायस्यानपायात्। नाप्यन्द्रियकज्ञाने स्वरूपायोग्यत्वं विषयासम्बन्धेन लौकिकप्रत्यक्षं प्रति तादात्म्यसम्बन्धेन विषयत्वेन कारणतया विषयत्वस्यैव ऐन्द्रियकज्ञानस्वरूपयोग्यतात्मकत्वात्, तस्य च केवलान्वयितया तत्रापि सत्त्वात्, अतस्तस्यातीन्द्रियत्वाभ्युपगमोऽसंभवदुक्तिक इति वाच्यम्; लौकिकैन्द्रियकज्ञानं प्रति तादात्म्यसम्बन्धेन प्रतिबन्धकत्वस्यैवातीन्द्रियत्वरूपत्वात्, तस्य चादृष्टादाविव तत्रापि कल्पने बाधकाभावात्।

ननु विषयतासम्बन्धेन लौकिकमानसप्रत्यक्षे तादात्म्यसंबन्धेन निर्विकल्पकत्वेन प्रतिबन्धकत्वमनावश्यकम्, विषयपुरस्कारेणैव ज्ञानस्यानुव्यवसीयमानतया

विषयोपनायकविरहादेव निर्विकल्पकस्याप्रत्यक्षत्वसम्भवादिति चेन्न; ज्ञानलक्षणसन्निकर्षस्य तद्विषयकज्ञानत्वेन तत्प्रकारकप्रत्यक्षं प्रति कारणतया निर्विकल्पकगवादिज्ञानस्य गवादिविषयकज्ञानत्वेन गवाद्युपनायकत्वसंभवात्।

न च जात्यखण्डोपाध्यतिरिक्तपदार्थस्य किञ्चिद्धर्मप्रकारेणैव भासमानत्वनियमेन गवादेर्निर्विकल्पकज्ञानांशे गोत्वादिनैव विशेषणत्वं वाच्यम्, तथा च गोत्वादिना गवादिप्रकारकज्ञानं प्रति गोत्वादिना गवादिज्ञानस्य कारणतया तस्य च निर्विकल्पककालेऽभावेन गवादिप्रकारेण निर्विकल्पकस्य प्रत्यक्षासम्भवादिति वाच्यम्, गवादिप्रकारेण गोनिर्विकल्पकस्य प्रत्यक्षासंभवेऽपि गोत्वप्रकारेणैव तत्प्रत्यक्षसंभवात्।

न च गोत्वप्रकारेण तद्विषयकनिर्विकल्पकस्य प्रत्यक्षाभ्युपगमे गोत्वादेर्गोत्वत्वादिनैव भानं वाच्यम्, न तु स्वरूपतो जातिनिष्ठनिरवच्छिन्नप्रकारतायाः समवायसम्बन्धावच्छिन्नत्वनियमात्, तादृशे च भाने गोत्वत्वेन गोत्वज्ञानस्यापेक्षणीयतया तस्य च तदानीमभावेन गोत्वादिप्रकारेणापि तद्विषयकप्रत्यक्षासंभवादिति वाच्यम्, तादृशप्रत्यक्षे गोत्वादेर्विषयित्वसम्बन्धेन स्वरूपतो भानसंभवात्, समवायान्यसम्बन्धेनापि जातेः स्वरूपतो भानस्य स्वीकार्यत्वात्। अन्यथा गौर्नास्तीति बुद्धावभावेऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन स्वरूपतो गोत्वभानासम्भवात्।

न च धर्मिणि स्वरूपतः समवायेन विशेषणतापन्नाया एव जातेः समवायान्यसम्बन्धेन स्वरूपतो भानमभियुक्तसम्मतम्, न तु समवायान्यसम्बन्धमात्रेण प्रकारत्वदशायामपि। अन्यथा कालिकसम्बन्धेन स्वरूपेण गोत्वप्रत्यक्षस्य काले, विषयितासम्बन्धेन स्वरूपतो गोत्वप्रकारकप्रत्यक्षस्य ज्ञाने च सम्भवेन कालो गौः, ज्ञानं गौरित्याकारकस्यापि प्रत्यक्षस्यापत्तेर्दुर्निवारत्वात्, तथा च गोत्वादिनिर्विकल्पस्य विषयितासम्बन्धेन स्वरूपतो गोत्वप्रकारेण प्रत्यक्षाभ्युपगमोऽसंभव इति वाच्यम्, कालादौ कालिकादिसम्बन्धेन स्वरूपतो गोत्वप्रकारकप्रत्यक्षस्येष्टत्वात् कालो गौरित्याकारकत्वस्य च तत्रापादयितुमशक्यत्वात्। तथाहि —

आपाद्यमानं कालो गौरित्याकारकत्वं यदि कालविशेष्यककालिकसम्बन्धेन स्वरूपतो गोत्वप्रकारकत्वम्, तदा तदिष्टमेव। यदि कालो गौरिति शब्दाभिलाप्यत्वम्,

तदा तद् दुरापाद्यं तज्ज्ञानसमानाकारज्ञानजननक्षमस्यैव शब्दस्य तज्ज्ञानाभिलापकत्वात्, गौरिति शब्दस्य च समवायेन गोत्वविशिष्टस्यैव वाचकत्वात् तद्घटितवाक्येन कालिकादिना गोत्वप्रकारकज्ञानाभिलापासंभवात्। अतो गोत्वादिविषयोपनायकाभावेन गोत्वादिनिर्विकल्पकस्य प्रत्यक्षं न भवतीति वक्तुमशक्यतया तदप्रत्यक्षत्वोपपत्तये लौकिकविषयतासम्बन्धेन मानसत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन निर्विकल्पकत्वेन प्रतिबन्धकत्वकल्पनस्यैवावश्यकतया निर्विकल्पकस्यातीन्द्रियत्वमक्षुण्णम्।

## सविकल्पकज्ञानम्

सविकल्पकज्ञानीयविषयता त्रिविधा भवति—प्रकारता, विशेष्यता, संसर्गता च। तत्र विनिगमनाविरहेण एकैकविषयतानिरूपकज्ञानत्वरूपं सविकल्पकज्ञानस्य लक्षणत्रयमवसेयम्, तच्च घटः पट इत्यादिरूपमनन्तम्।

जन्यञ्च तद्द्विविधम्, लौकिकालौकिकभेदात्। लौकिकसन्निकर्षजन्यं लौकिकम्, अलौकिकसन्निकर्षजन्यमलौकिकम्। लौकिकत्वमलौकिकत्वञ्च लौकिकालौकिकव्यपदेशनियामकः स्वरूपसम्बन्धविशेषः। तत्र लौकिकसन्निकर्षः षड्विधः, संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-विशेषणताभेदात्। ते च क्रमेण द्रव्य-द्रव्यसमवेत-द्रव्यसमवेतसमवेत-शब्द-शब्दसमवेतानामभावसमवाययोश्च लौकिकप्रत्यक्षहेतवः।

## अलौकिकसन्निकर्षः

अलौकिकसन्निकर्षस्त्रिविधः—सामान्यलक्षणः, ज्ञानलक्षणः, योगजश्चेति। तत्र समानानां भावः सामान्यमिति व्युत्पत्त्या सामान्यं जातिर्घटादिव्यक्तिश्च, तदेव लक्षणं स्वरूपं यस्येति व्युत्पत्त्या जात्यात्मको व्यक्त्यात्मकश्च प्रथमः प्राचीनमते, नवीनमते च सामान्यं लक्षणं विषयविधया निरूपकं यस्येति व्युत्पत्त्या जात्यात्मकस्य व्यक्त्यात्मकस्य च सामान्यस्य ज्ञानमेव सामान्यलक्षणः सन्निकर्षः। ज्ञानं लक्षणं स्वरूपं यस्येति व्युत्पत्त्या ज्ञानात्मकः सन्निकर्षो द्वितीयः। योगो मनसः संयमस्तदभ्यासाज्जातो धर्मविशेषो योगजनामा तृतीयः सन्निकर्षः।

ननु धूमत्वात्मकसामान्यलक्षणस्य सन्निकर्षस्य नित्यत्वेन सकलधूमविषयक-प्रत्यक्षं सततमापद्येतेति चेन्न; इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यस्यैव सामान्यलक्षणप्रत्यासत्तित्वेनाङ्गीक्रियमाणतयोक्तापत्तेः परिहारात्। तथा चेन्द्रियं चक्षुरादिस्तेन सम्बद्धः संयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानम्, तादृशज्ञान-निरूपितप्रकारताविशिष्टमेव धूमत्वात्मकसामान्यं प्रत्यासत्तिः, न तु केवलं सामान्यमिति।

यदा चक्षुरादीन्द्रियसंयुक्तधूमादिविशेष्यकं धूमत्वप्रकारकं धूम इति ज्ञानम्, तदा धूम इति ज्ञाने धूमत्वं प्रकारविधया भासत इति तादृशज्ञाननिरूपितप्रकारता-विशिष्टधूमत्वात्मकसम्बन्धेन सर्वधूमानामिन्द्रियसन्निकृष्टतया धूमा इति सकलधूम-विषयकं प्रत्यक्षमुत्पद्यते, न तु सर्वदा, अतो नोक्तदोषावसरः।

नन्विन्द्रियसम्बद्धसामान्यमेव सन्निकर्ष इत्युक्तौ निर्वाहे ज्ञानप्रकारीभूतमिति व्यर्थमिति चेन्न; पुरोवर्तिनि धूलीपटले अयं धूम इति धूमत्वप्रकारकभ्रमात्मकज्ञाना-नन्तरं धूमा इति सकलधूमविषयकालौकिकप्रत्यक्षानुपपत्तेर्धूमत्वस्येन्द्रियसम्बद्धत्वा-भावेन सन्निकर्षत्वशून्यतया धूमानामिन्द्रियसन्निकृष्टत्वाभावात्। ज्ञानप्रकारीभूतभाग-प्रवेशे तु चक्षुःसम्बद्धधूलीपटलविशेष्यकम् अयं धूम इति भ्रमज्ञानम्, तत्र प्रकार-विधया धूमत्वं विषयीभवति। तथा च तादृशचक्षुःसंयुक्तधूलीपटलविशेष्यकभ्रमज्ञान-प्रकारताविशिष्टधूमत्वसामान्यसन्निकर्षाद् धूमा इत्यलौकिकप्रत्यक्षे न किञ्चिद् बाधकम्।

इन्द्रियसम्बन्धस्तु संयोगादिषड्विधसन्निकर्षान्यतमो लौकिको ग्राह्यः। अन्यथा सुरभि चन्दनमित्याकारकं चन्दनांशे लौकिकसन्निकर्षजन्यं सौरभांशे च ज्ञानलक्षणा-लौकिकसन्निकर्षजन्यं चाक्षुषं यत्र जातम्, तत्र ज्ञानलक्षणात्मकचक्षुःसम्बन्धविशिष्ट-सौरभविशेष्यक-सुरभि चन्दनमिति-ज्ञानप्रकारताविशिष्टसौरभत्वप्रत्यासत्त्या सकल-सौरभविशेष्यकचाक्षुषापत्तिः। न चेष्टापत्तिः कर्तुं शक्या, बहिरिन्द्रियस्य स्वयोग्य-मात्रमुख्यविशेष्यकज्ञानाजनकत्वनियमात्। न च लौकिकसन्निकर्षप्रवेशेऽपि तद्-दोषतादवस्थ्यं सौरभे चक्षुःसंयुक्तसमवायात्मकलौकिकसन्निकर्षस्यानपायादिति वाच्यम्; चक्षुरादिलौकिकसन्निकर्षविशिष्टविशेष्यतानिरूपितप्रकारतापन्नसामान्यस्य

प्रत्यासत्तित्वोपगमात्। वै० स्वविशिष्टनिष्ठत्वस्वप्रयोज्यत्वोभयसम्बन्धेन, उक्तज्ञानीय-सौरभनिष्ठविशेष्यतायाश्चक्षुःसंयुक्तसमवेतनिष्ठत्वेऽपि चक्षुःसंयुक्तसमवायप्रयोज्यत्वा-भावेन दोषाभावात्। किञ्च, सन्निकर्षे लौकिकत्वानुक्तौ विनश्यदवस्थचक्षुःसंयोगाद् घटचाक्षुषोत्तरं तादृशज्ञानात्मकेन्द्रियसम्बन्धविशिष्टविशेष्यकलौकिकचाक्षुषज्ञान-प्रकारीभूतघटत्वप्रत्यासत्त्या सकलघटविषयकचाक्षुषापत्तिश्च जायेत।

ननु गुरुत्वेन सह मनसो लौकिकसन्निकर्षस्य गुरुत्वे लौकिकविशेष्यतायाश्चा-भावात् तादृशलौकिकविशेष्यताशालिमानसप्रकारताविशिष्टगुरुत्वत्वात्मकसामान्यस्या-प्रसिद्धत्वाद् गुरुत्वत्वेन यत् किञ्चिद् गुरुत्वोपस्थित्यनन्तरं सकलगुरुत्वविषयकमानस-प्रत्यक्षानुपपत्तिरिति चेन्न; इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतसामान्यस्य बहि-रिन्द्रियस्यैव प्रत्यासत्तित्वाभ्युपगमात्। मनसः सामान्यलक्षणप्रत्यासत्तित्वस्य तु ज्ञान-प्रकारीभूतसामान्यस्यैवाङ्गीक्रियमाणत्वात्।

ननु संयोगेन घटादिव्यक्तिप्रकारकभूतलविशेष्यकचाक्षुषोत्तरं संयोगेन तद्घट प्रकारकतद्घटाश्रययावद्व्यक्तिविशेष्यकं सर्वानुभवसिद्धमलौकिकचाक्षुषं न स्यात्, तद्घटादेस्तादृशप्रकारतावत्त्वेऽपि जातित्वाभावादिति चेन्न; समानानां भावः सामान्यमिति व्युत्पत्त्या नानाधिकरणप्रत्यासन्नसमानधर्ममात्रस्य सामान्यतया क्वचित्तत्त्वेन ग्रहणे बाधकाभावेन धूमत्वभूतलत्वादिजातिरूपनित्यसामान्यस्यैव क्वचिद् घटपटाद्यात्मकव्यक्तिरूपानित्यसामान्यस्यापि सम्भवात्।

तथा च यदा संयोगेन भूतले एको घटो दृष्टस्तदनन्तरं चक्षुःसंबद्धभूतल-विशेष्यकघटवद्भूतलमिति ज्ञानप्रकारताविशिष्टघटात्मकप्रत्यासत्त्या संयोगेन सकल-घटवद्भूतलानीत्यलौकिकं प्रत्यक्षं जायते।

यदा च तद्घटः समवायेन कपाले दृष्टस्तदनन्तरं चक्षुःसम्बद्धकपालविशे-ष्यकघटवत्कपालमिति ज्ञानप्रकारताविशिष्टघटात्मकप्रत्यासत्त्या समवायेन सकल-घटवत्कपालानीत्यलौकिकं प्रत्यक्षं जायते। एतादृशस्थले समानानां भावः सामान्य-मिति व्युत्पत्तिलभ्यमिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतघटाद्यात्मकानित्यसामान्यं प्रत्यासत्तित्वेन स्वीकार्यम्।

ननु सयोगेन घटवद्भूतलमिति ज्ञानोत्तरमिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकार-घटात्मकप्रत्यासत्त्या कालिकेन घटवद् यावद्विषयकालौकिकचाक्षुषापत्तिरपि

स्यादिति चेन्न; सामान्यं येन सम्बन्धेन ज्ञायते, तेनैव सम्बन्धेनाधिकरणानां प्रत्यासत्तित्वस्वीकारात्।

नन्वेवमपि यदा क्वचिद् देशे विनष्टतद्घटव्यक्तिप्रकारकं भ्रमात्मकचाक्षुषं जातम्, तदा चक्षुःसम्बद्धविशेष्यकज्ञानप्रकारीभूततद्घटसन्निकर्षेण सर्वेषां तद्घटवतामलौकिकप्रत्यक्षस्य सर्वानुभवसिद्धस्यानुपपत्तिः। एवं यदा चक्षुरादीन्द्रियसंयुक्तसमवायेन घटत्वप्रकारकसमवायसंसर्गकघटविशेष्यकं प्रत्यक्षज्ञानं पूर्वदिने जातं परदिने च घटत्वे चक्षुःसंयुक्तसमवायमन्तरापि पूर्वदिवसीयतादृशघट इति ज्ञानप्रकारीभूतघटत्वात्मकनित्यसामान्यरूपस्यालौकिकसन्निकर्षात्मककारणस्य सत्त्वात्, यावद्घटविषयकस्य घटा इत्यलौकिकप्रत्यक्षस्यापत्तिरपीति चेन्न; तत्तदिन्द्रियसम्बद्धविशेष्यकतत्तदिन्द्रियजन्यसामान्यज्ञानस्यैव तत्तदिन्द्रियस्य सामान्यलक्षणप्रत्यासत्तित्वेनाङ्गीक्रियमाणतयोक्तदोषानवकाशात्।

तथा च प्रथमस्थले चक्षुःसम्बद्धविशेष्यकचक्षुर्जन्यतद्घटज्ञानात्मकसन्निकर्षरूपकारणस्य सत्त्व एव कार्योत्पादेन न व्यतिरेकव्यभिचारः। द्वितीयस्थले च चक्षुःसम्बद्धविशेष्यकचक्षुर्जन्यघटत्वज्ञानरूपकारणाभावेनैव कार्यानुत्पत्त्या नान्वयव्यभिचारश्चेति।

न चैवमिन्द्रियस्य द्विधा प्रवेशेन सामान्यलक्षणप्रत्यासत्तिशरीरे गौरवमिन्द्रियभेदेन कार्यकारणभावस्य भिन्नतया कार्यकारणभावे बाहुल्यं चापरिहार्यमिति वाच्यम्, सामान्यज्ञानमात्रस्यैव सामान्यप्रत्यासत्तित्वोपगमात्।

नन्वेवं ज्ञानलक्षणसामान्यलक्षणसन्निकर्षयोर्ज्ञानरूपत्वादैक्यप्रसक्त्याऽलौकिकसन्निकर्षस्य त्रिविधत्वमनुपपन्नमिति चेन्न; यद्विषयकज्ञानं यदा सामान्यलक्षणप्रत्यासत्तिरूपं तदा तदाश्रयाणामलौकिकं साक्षात्कारं जनयति, स्वप्रकारीभूतसामान्यवन्निष्ठविशेष्यतासम्बन्धेन सामान्यप्रकारकप्रत्यक्षं प्रति स्वविषयीभूतसामान्यवन्निष्ठविषयतासम्बन्धेन सामान्यज्ञानात्मकसामान्यलक्षणप्रत्यासत्तेर्हेतुत्वात्।

यदा च यद्विषयकज्ञानं ज्ञानलक्षणप्रत्यासत्तिरूपम्, तदा तस्यैवालौकिकं प्रत्यक्षं जनयति, न तु तदाश्रयाणाम्। प्रकारतासम्बन्धेन प्रत्यक्षं प्रति विषयतासम्बन्धेन ज्ञानलक्षणप्रत्यासत्तेर्हेतुत्वात्। एवञ्चोभयोर्ज्ञानस्वरूपत्वेऽपि फलवैचित्र्यात् प्रत्यासत्तितावच्छेदकभेदाच्च विभिन्नत्वेनालौकिकसम्बन्धत्रयस्य सूपपन्नत्वात्।

## सामान्यलक्षणप्रत्यासत्तिसाधिका युक्तिः

ननु षड्विधलौकिकसन्निकर्षत एव सर्वसामञ्जस्येन सामान्यलक्षणप्रत्यासत्तेः स्वीकारो व्यर्थ इति चेन्न; तथा सति सर्वेषु वह्निधूमादिषु लौकिकसन्निकर्षस्य युगपद्विरहेण सर्ववह्निधूमादिविषयकप्रत्यक्षस्य युगपदनुपपत्तिप्रसङ्गात्।

न च सकलवह्नीनां सकलधूमानाञ्च युगपत्प्रत्यक्षमसिद्धमेव, अतः सामान्यलक्षणाया अस्वीकारेऽपि न काचनापत्तिरिति वाच्यम्; सन्निकृष्टे महानसीयादिधूमे वह्नेर्व्याप्तिलक्षणसम्बन्धस्य निर्णीतत्वादन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति सर्वानुभवसिद्धसंशयानुपपत्तेः।

सामान्यलक्षणायां स्वीकृतायां तु ततः सकलधूमानामुपस्थितिसम्भवेन कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वस्यानिश्चिततया तत्र तथाविधसंशयस्योपपत्तिसम्भवात्।

न च सामान्यलक्षणायां स्वीकृतायां प्रमेयत्वेन यस्य कस्यचित् पदार्थस्य ज्ञानदशायां प्रमेयत्वप्रत्यासत्त्या सकलप्रमेयज्ञानस्य सम्भवेन सर्वज्ञत्वापत्तिरिति वाच्यम्; प्रमेयत्वेन सकलप्रमेयाणां ज्ञानेऽपि तत्तद्विशेषधर्मेणाज्ञानात् सर्वज्ञत्वापत्तेरभावात् सर्वैः साधारणधर्मैः सर्वैर्विशेषधर्मैश्च सर्वपदार्थविषयकज्ञानवत्त्वस्यैव सर्वज्ञत्वरूपत्वात्।

## ज्ञानलक्षणप्रत्यासत्तिसाधिका युक्तिः

ननूक्तयुक्त्या सामान्यप्रत्यासत्तेः सिद्धत्वेऽपि ज्ञानप्रत्यासत्तेः स्वीकृतिर्निर्युक्तिकैवेति चेन्न; चन्दननिष्ठतया पूर्वदिने आघ्रातस्य सौरभस्य स्मरणेन परदिने दूराच्चक्षुःसंयोगमात्रेण सुरभि चन्दनमिति चाक्षुषं जायते, तत्र प्रकारान्तरेण सौरभस्यालौकिकभानानुपपत्तेः। ज्ञानलक्षणप्रत्यासत्तिस्वीकारे च स्मरणात्मकसौरभज्ञानरूपप्रत्यासत्तिबलेन तत्सम्भवात्।

ननूक्तप्रत्यक्षे सौरभस्य भानं स्मरणात्मकसौरभत्वज्ञानरूपसामान्यलक्षणप्रत्यासत्त्यैव सम्भवतीति ज्ञानलक्षणप्रत्यासत्तिर्व्यर्थैवेति चेन्न; चन्दनांशे स्वरूपतः सौरभत्वविषयकस्य सुरभि चन्दनमिति भ्रमात्मकप्रत्यक्षस्योपपत्तये ज्ञानप्रत्यासत्तेरावश्यकत्वात्।

## योगजसन्निकर्षः

योगिनः क्वचिदेकत्र स्थिता एव सार्वकालिकान् सार्वदेशिकान् ऐन्द्रियकानतीन्द्रियाँश्च पदार्थान् योगमहिम्ना पश्यन्तीति शास्त्रपुराणादिषु शतशः श्रूयते, तत्तेषामीदृशं प्रत्यक्षं लौकिकसन्निकर्षतो न सम्भवति; देशतः कालतश्च विप्रकृष्टैः पदार्थैर्योगिनामपि चक्षुरादेर्लौकिकसन्निकर्षस्य संयोगादेर्लौकिकसन्निकर्षस्य सन्निकृष्यमाणतन्त्रतयाऽसम्भवात् ।

सामान्यलक्षणया ज्ञानलक्षणया चापि तादृशं प्रत्यक्षं नोपपद्यते, तयोरुभयोरपि ज्ञानरूपत्वादेकस्मादनेकस्माच्च ज्ञानात् तादृशप्रत्यक्षस्य दुर्घटत्वात्, सर्वसामान्यज्ञानस्य च योगजप्रत्यासत्तिं विनाऽसम्भवात् ।

न च प्रत्यासत्तिनिरपेक्षमेव तेषां तादृशं प्रत्यक्षं स्यादिति शक्यं वक्तुम्; प्रत्यक्षे सन्निकृष्टस्यैव भाननियमात्, अन्यथाऽयोगिनामपि सर्वविषयकस्य तादृशप्रत्यक्षस्यापत्तेः, अतः शास्त्रेषु श्रुतस्य योगिनां सार्वज्ञ्यस्योपपत्तये योगजः सन्निकर्षो नूनमभ्युपेयः । स च मनःसंयमलक्षणाद् योगाज्जातो धर्मविशेषः, स एव सार्वदेशिकसार्वकालिकपदार्थैः सह योगीन्द्रियस्य सन्निकर्षः, सन्निकर्षतानियामकसम्बन्धश्च स्वाश्रयसमानकालिकत्वम्, तथा च विषयतासम्बन्धेन सामान्यप्रत्यासत्त्यजन्यज्ञानप्रत्यासत्यजन्यलौकिकसन्निकर्षाजन्यतत्तद्योगिप्रत्यक्षे तत्तद्योगिनिष्ठो योगजो धर्मः स्वाश्रयसमानकालिकत्वसम्बन्धेन हेतुः ।

स च सन्निकर्षो योगिनो युक्तयुञ्जानभेदेन द्विविधतया द्विविधः । तत्र युक्तस्य असम्प्रज्ञातसमाध्यभ्यासेन परिपक्वतां गतस्य योगिनः सर्वपदार्थानां भानं सर्वदा भवति ।

युञ्जानस्य सम्प्रज्ञातसमाधिमात्रनिष्णातस्य असम्प्रज्ञातस्योत्कृष्टां काष्ठामप्राप्तस्य अपरिपक्वस्य योगिनश्चिन्तासहकारेण योगजधर्मजं प्रत्यक्षं भवति । चिन्ता च दिदृक्षितपदार्थाभिमुखं चेतस आवर्जनम् ।

तदित्थं न्यायनये लौकिकालौकिकनित्यभेदेन प्रत्यक्षं सामान्यतस्त्रिविधम्—उक्तलौकिकसन्निकर्षतो जायमानं षड्विधं लौकिकम्, उक्तालौकिकसन्निकर्षतो जायमानं त्रिविधमलौकिकम्, परमात्मगतं नित्यं चेति संक्षेपः ।

## उपसंहारः

उक्तप्रकारेणास्मिन् निबन्धे विस्तारातिशयभयात् प्रत्यक्षविषयकमर्वाचीन-वैज्ञानिकमतमुपेक्ष्यैव भारतीयदर्शनानां तत्सम्बन्धे समुपलभ्यमानानि प्रायो निखिलानि मतानि संक्षेपेणोपवर्णितानि। तत्र दर्शनान्तरमतापेक्षया न्यायमतस्य विविधक्षोदक्षेमसहतया युक्तिप्रमाणोपष्टब्धतया च मनीषिमनःप्रीणनपाटवं मे प्रतिभाति। तथाहि—

चार्वाकमते जडानां पृथिव्यादिभूतानां कायाकारमापन्ने सङ्घे चैतन्ययोग्यताया उद्भवेन चक्षुरादीन्द्रियाणि तत्रैव प्रत्यक्षज्ञानमुत्पादयन्तीत्यभ्युपगतम्, परं देहात्मवादे लोकसुव्यवस्थायै अपेक्षिताया नैतिकताया रक्षणस्य दुर्घटतया नवजातस्य शिशोः स्तन्यपाने प्रवृत्त्यनुपपत्त्या बाल्येऽनुभूतस्य वार्द्धक्ये स्मरणानुपपत्त्या कृतहानाकृताभ्यागमयोश्चापरिहार्यापत्त्या च न तन्मतं ग्रहीतुं शक्यमिति प्रत्यक्षज्ञानसम्बन्धेऽपि तदीयो विचारोऽनुपादेय एव।

बौद्धमते रूपविज्ञानवेदनासंज्ञासंस्कारस्कन्धपञ्चकस्य क्षणिकस्यालयविज्ञानमात्रस्य वा आत्मत्वमभ्युपगतम्, तत्रैव चेन्द्रियव्यापारेण प्रत्यक्षज्ञानस्योत्पत्तिरङ्गीकृता। एतदपि मतमात्मनो नित्यत्वानभ्युपगमेन दुरुपपादम्, कृतहानाकृताभ्यागमयोरत्राप्यपरिहार्यत्वात्। आलयविज्ञानस्य सन्तन्यमानताबलेन तत्परिहारो दुष्करः। सन्तानसन्तानिनोरन्यत्वानन्यत्वाभ्यां दुर्निरूप्यत्वादिति बौद्धविचारप्रासादस्याधारशिलाभूतस्यात्मविषयकविचारस्यैव दुःसमर्थतया तदाधारेणाभ्युपगम्यमाना प्रत्यक्षज्ञानप्रक्रिया सुतरामेव जातापक्रिया सम्पद्यते।

जैनदर्शने आत्मनो द्रव्यपर्यायरूपत्वमङ्गीकृत्य द्रव्यात्मना स्थिरत्वं पर्यायात्मना क्षणिकत्वं च स्वीकृत्य आत्मविषयकयोः स्थिरक्षणिकवादयोः समन्वयं कर्तुं प्रयत्नः कृतः। आत्मनश्चानन्तज्ञानराशिरूपत्वमुररीकृत्य इन्द्रियजन्यज्ञानस्य पारमार्थिकप्रत्यक्षत्वं च निराकृत्य विशदज्ञानस्य प्रत्यक्षरूपत्वमुपवर्णितम्। इदमपि मतं विपश्चिच्चेतश्चमत्कृतये न कल्पते; द्रव्यपर्याययोरात्यन्तिकभेदाभेदाभ्यां कथञ्चिद् भेदाभेदाभ्यां च निर्वक्तुमशक्यत्वात्। आत्यन्तिकभेदे एकस्य तदुभयात्मकताया आत्यन्तिकाभेदे च तत्र मिथो विरुद्धयोः स्थिरत्वक्षणिकत्वयोश्चानुपपन्नत्वात्।

कथञ्चिद् भेदाभेदोपगमोऽपि न मनोरमः; द्रव्ये पर्यायस्य भेदाभेदयोः पर्याये द्रव्यस्य भेदाभेदयोः स्थापनायावच्छेदकभेदस्य कल्पनीयत्वात्, कल्प्यमानैरवच्छेदकभेदैर्द्रव्यपर्याययोर्भेदस्य पुनर्विचारणीयतया पूर्वदोषस्य तादवस्थ्यापत्तेः। इत्थञ्चात्मविषयिण्या जैनदर्शनोक्तमान्यताया एवायुक्ततया तत्सम्बद्धाया प्रत्यक्षविषयिण्या विचारधारायाः सुतरामप्रामाणिकत्वं पर्यवस्यति।

सांख्ययोगवेदान्तेषु ज्ञानमन्तःकरणवृत्तिरूपमन्तःकरणगतं चान्तःकरणपरिणामरूपतया निसर्गतो जडत्वेऽपि स्वप्रकाशपुरुषचैतन्यच्छायया तस्यार्थप्रकाशकत्वं भवतीति स्वीकृतम्, परमिदं निरवयवान्नित्यादपरिणामिनो मनसोऽवश्यक्लृप्ताद् व्यतिरिक्तस्य सावयवस्यानित्यस्य परिणामिनोऽन्तःकरणस्याप्रामाणिकतया न श्रद्धेयम्; शास्त्रेषु सावयत्वादिना श्रूयमाणमन्तःकरणं शरीरान्तर्निष्ठहृद्देशरूपमेव। किञ्चात्मनो निसर्गचैतन्यरूपत्वमपि न यौक्तिकम्, प्रमाणव्यापारं विना तस्याननुभवात्। अत आत्मनो ज्ञानस्वरूपयोग्यत्वलक्षणचेतनत्वमुपगम्य प्रमाणव्यापारतस्तत्र गुणात्मकस्य ज्ञानस्य प्रादुर्भावपक्ष एव स्वच्छतया आस्थेयः।

मीमांसादर्शनेऽभ्युपगतं प्रत्यक्षज्ञानं तदुद्भवप्रकारजातञ्च न्यायमतानुरूपतया सन्निकर्षाद्यवान्तरविषयेष्वयौक्तिकदृष्ट्युपग्रहेण तदंश एव तन्मतमवमान्यम्।

न्यायवैशेषिकशास्त्रयोरभ्युपगतं निरुक्तं प्रत्यक्षादिस्वरूपं युक्तिसिद्धतया प्रामाणिकतया निर्दोषतया च विद्वज्जनैः समादरणीयम्। तत्रालौकिकसन्निकर्षेषु सामान्यलक्षणाया ज्ञानलक्षणायाश्च प्रत्यासत्तेर्विषयेऽन्यदार्शनिकानां विप्रतिपत्तौ सत्यामपि तदुभयप्रयोजनत्वेन निर्दिष्टस्य प्रकारान्तरेणानुपपत्त्या तयोरभ्युपगमोऽपि नूनं स्वीकार्यः, ज्ञानस्य प्रत्यासत्तित्वे परमते पर्वते वह्न्यादिबुद्धेरेकपदार्थेऽपरपदार्थान्वयबुद्धेश्च ज्ञानलक्षणप्रत्यासत्तिजन्यप्रत्यक्षेऽन्तर्भावसम्भवेनानुमानादिप्रमाणलोपापत्तिरिति यद् दूषणं दर्शनान्तरेषु समुद्भावितं तन्न संगच्छते; अनुमानादेरप्रमाणत्वेऽनुमित्यादीनाञ्चोपनीतप्रत्यक्षरूपत्वे चानुमितौ हेतुव्यापकत्वेन गृह्यमाणमात्रविषयकत्वस्य, अन्वयबोधे च शब्दोपस्थाप्यार्थमात्रविषयकत्वस्यानुपपत्तिप्रसङ्गादिति न्यायवैशेषिकोक्तप्रत्यक्षज्ञानविषयकविचारजातस्य निर्दोषतया लोकानुभवानुकूलतया च प्रत्यक्षादिविषयकस्तदनुमत एव पन्थाः प्रशस्यः प्रतिभातीत्यलं विस्तरेणेति शम्॥

# मम्मटविश्वनाथयोः काव्यलक्षणप्रयोजने

श्रीगणेश-उमाकान्तथिटे, २१ एरण्डवणा, पुण्यपत्तनम् ।

काव्यलक्षणं काव्यप्रयोजनं चेति द्वौ विषयौ न केवलं संस्कृतसाहित्यशास्त्रे एव; अपि त्वितरत्रापि महत्त्वं प्राप्तौ पुनः पुनश्चर्चितौ च । साहित्यं नाम किम्, तस्य च प्रयोजनं किम् ? इति प्रश्नयोरुत्तरेष्वेवान्येषामपि काव्यशास्त्रान्तर्गतानां विचाराणां समावेशः कर्तुं शक्यः । संस्कृतसाहित्यशास्त्रे ये साहित्यस्य समग्रविचारार्थं प्रवृत्ता ग्रन्थास्ते प्राय एतावेव विषयौ ग्रन्थप्रारम्भे चिन्तयन्ति । मम्मटविश्वनाथयोः काव्यलक्षणप्रयोजनविचारस्तस्य च तौलनिकी चिकित्सा अत्र क्रियते । तदनुरोधेन च केषाञ्चित् सुप्रतिष्ठितमतानां परामर्शोऽप्यभिप्रेतः ।

## काव्यलक्षणम्

मम्मटो विश्वनाथश्च यद्यपि केषुचिद् विषयेषु विवदेते; तथापि तयोर्महदेतत् साम्यं यद् द्वावपि काव्ये रसमाहात्म्यं जानीतः । तच्च ताभ्यां प्रत्यक्षतया, अप्रत्यक्षतया प्रकटीकृतमेव । तथा च ध्वनिर्द्वाभ्यामपि पुरस्कृतः । तथापि काव्यलक्षणसदृशे मूलभूते विषये तौ परस्परं भेदं भजेते इति विस्मयजनकम् । साहित्यदर्पणकारो विश्वनाथः स्वकीयग्रन्थे काव्यफलविवेचनानन्तरं लक्षणं प्रपञ्चयति । तत्र प्रथमं तेन मम्मट एव कण्ठग्राहं गृहीतः, तस्य च लक्षणं महतोत्साहेन परीक्षितम् ।

तत्र मम्मटस्य लक्षणम्—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति । अत्र प्रत्येकं पदं कथमयुक्तं तत्तद् दर्शयन् विश्वनाथः 'अदोषौ' इति पदेन प्रारभते ।

दोषरहितौ शब्दार्थौ काव्यमित्युक्तेऽव्याप्तिर्दोषः । "न्यक्कारो ह्ययमेव..." इत्यादीनां सत्स्वपि दोषेषु ध्वनित्वेन सर्वैरपि काव्यत्वाङ्गीकारात् । कश्चिदेतद् वदेद् यदत्राल्प एवांशो दुष्टः, न सर्वोऽपीति; तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजकः, यत्रांशे न स काव्यत्वप्रयोजक इति रज्ज्वाकर्षणे इदं काव्यमकाव्यं वा किमपि न स्यात् । न च दोषाः काव्यस्य कञ्चिदेवांशं दूषयन्ति, अपि तु सर्वमेव काव्यम् । अपि च

दोषः कः ? काव्यात्मभूतं रसं यो बाधते सः। काव्यात्मभूतं रसमनुपकुर्वाणो दोष एव न। तथा च मम्मटेनाप्युक्तम्—"मुख्यार्थहानिर्दोषः, रसश्च मुख्यस्तदाश्रयाद्वाच्यः" इत्यादि। तथा च नित्यदोषा अनित्यदोषा इति व्यवस्थापि कृता मम्मटेनैव। एकस्मिन् रसे यो दोषः सोऽन्यत्र गुणोऽपि स्यात्। यथा श्रुतिकटुत्वं शृङ्गारे दोषः, परं रौद्रे स गुणः। एवं मम्मटेन—"इदानीं क्वचिददोषा अप्येते उच्यन्ते" इति निर्दिष्टम्। किञ्च, सर्वथा निर्दोषस्य काव्यस्यासम्भवः। तेन च काव्यस्य क्षेत्रमपि लघूभवति। यतः कालिदासादीनामपि (येषां महाकवित्वं निर्बाधं तेषामपि) काव्ये दोषोपलब्धिः।

'अदोषौ' इति पदे 'नञ्' ईषदर्थे ग्राह्य इत्युच्यते चेत् ? तदपि न साधु, तेन निर्दोषयोः काव्यत्वं न स्यात्। यतः काव्येऽल्पा दोषा ( न बहवः ) आवश्यकाः स्युः। अथ नैतादृशः शब्दाच्छक्तः कार्यः; सति सम्भवे ईषद्दोषावित्यर्थो ग्राह्य इति चेत ? तदपि काव्यलक्षणेऽवाच्यम्। रत्नानां लक्षणे कीटानुवेधादयो दोषाः परिहर्तव्या इति न वाच्यम् ; कीटानुवेधादयो दोषा रत्नानां रत्नत्वं व्याहन्तुं नं ईशाः। किं तर्हि ? उपादेयतारतम्यमेव कर्तुम्। एवमेव काव्यस्य स्वरूपनिर्धारणप्रसङ्गे दोषाणामुल्लेखोऽयोग्यः।

सगुणाविति विशेषणमपि नार्थावहम्, "ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः" इत्यादिना मम्मटेन स्वयमेव गुणानां रसधर्मता कथिता। तस्माद् गुणा न स्वरूपाधायकाः काव्यस्य; अपि तु उत्कर्षाधायकाः। यदि चेदमुच्यते यत् "गुणानां रसान्वयव्यतिरेकानुसारित्वेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यस्य रसवन्तौ शब्दार्थौ काव्यम्" इत्यभिप्रायः, तथापि तदयुक्तम्; गुणानामुत्कर्षमात्रकारकत्वात्। तथा च काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः शौर्यादिवत्— इत्याद्युच्यते। अपि च 'नहि प्राणिमन्तो देशाः' इति वक्तव्ये 'शौर्यादिमन्तो देशाः' इत्युच्यते। अलङ्काराणां तु कटककुण्डलादिवत्त्वं प्रसिद्धम्। तेन सर्वत्र सालङ्कारौ शब्दार्थौ आवश्यकौ, क्वचित्तु स्फुटालङ्कारविरहश्चलिष्यतीति योऽभिप्रायः 'अनलङ्कृती पुनः क्वापि' इति पदसमूहेन सूचितः, सोऽकिञ्चित्करः।

एवं विश्वनाथो मम्मटस्य लक्षणं खण्डयन् मध्ये मध्येऽन्येषामपि काव्यलक्षणानि दूरीकुर्वन् स्वं लक्षणं प्रददाति—"वाक्यं रसात्मकं काव्यम्" इति।

"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति भरतमुनेः सूत्रानुसारं रसस्वरूपमग्रतो विश्वनाथेन स्पष्टीकृतम्। तादृशस्य रसस्य, ततश्च भावाः, रसाभासा इत्यादीनामपि काव्यलक्षणेऽन्तर्भावोऽस्तीति बोध्यम्। एवंरूपं काव्यम्।

अत्रेदमवधेयम्—'काव्यस्य रसः आत्मा' इत्येवंरूपेऽभिप्राये न कस्यापि मतभेद आसीत्। ("काव्यस्यात्मन्यङ्गिनि रसादिरूपे न कस्यचिद् विमतिः"—व्यक्तिविवेके) भरतमुनिः, अग्निपुराणकर्ता, आनन्दवर्धनः, अभिनवगुप्तः, स्वयं मम्मटः, जगन्नाथोऽपि च काव्यस्यात्मा कः? यदि न रसः, तर्हि कोऽन्यः? इति प्रश्ने पृष्टे रसस्यैव पक्षपातितां कुर्युः। तेनैकतो दृष्टं चेद् विश्वनाथेन न नूतनं किमपि कथितम्। अपरतश्च 'दृष्टे काव्यस्य रस आत्मा, गुणाः शौर्यादिवत्' इत्यादिरूपकस्याङ्गीकृतत्वेऽपि स्वकीयेषु लक्षणेषु रसस्य समावेशे विश्वनाथं वर्जयित्वा नान्य उपरिनिर्दिष्टः करोति। तेन विश्वनाथोऽपरेभ्यो भिद्यते।

विश्वनाथस्य 'काव्यलक्षणस्य' भावार्थं स्वीकृत्यापि तर्कशास्त्रदृष्ट्या तस्य परीक्षणं कुर्वन् जगन्नाथस्तस्य लक्षणं सदोषं मन्यते। तथा च रसगङ्गाधरे—"यत्तु साहित्यदर्पणे रसवदेव काव्यमिति निर्णीतम्, तन्न; वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः। न चेष्टापत्तिः, महाकविसंप्रदायस्याकुलीभावप्रसङ्गात्। तथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि कविभिर्वर्णितानि। न च तत्रापि यथाकथञ्चित् परम्परया रससंस्पर्शोऽस्त्येवेति वाच्यम्; ईदृशरसस्पर्शस्य गौश्चलति, मृगो धावति—इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात्।"

आधुनिकटीकाकारैरपि मम्मटविश्वनाथयोः काव्यलक्षणे परीक्ष्य स्वाभिप्रायः प्रदत्तः, परं तत्र मम्मटस्य यथाकथञ्चित् समर्थनं कर्तव्यमित्येवं भूमिका भासते। यथा किल मम्मटस्तेषां जामाता एव। असत्पक्षसमर्थने तेषां समुद्यमशीलतां ज्ञातुमसमर्था वयम्।

तत्र डॉ० सुशीलकुमार-दे-महोदयाः Some problems of Sanskrit Poetics इति पुस्तके मम्मटं समर्थयन्तो वदन्ति—"मम्मटस्य काव्यलक्षणे यैः प्रहारः कृतः, तेषां स्वकीयानि लक्षणान्यप्येवं प्रहारान् अर्हन्ति।" अत्रेदं स्पष्टं यदितरेषां लक्षणानि दुष्टानीति कृत्वा मम्मटस्य लक्षणस्था दोषा न लघूभवन्ति। ते पुनर्वदन्ति मम्मटो

विश्वनाथस्योपजीव्यः, परं तस्य लक्षणे प्रहरन्नेव विश्वनाथो ग्रन्थं प्रारभते। अत्रोच्यते—उपजीव्यता दोषान् न च्छादयति। न चोपजीव्यस्य दोषाः स्वीकार्या जानता। (न च पूर्वजो मूढ आसीदिति तत्कुपितेन विदुषा अपि मूढ इव वर्तितव्यं वा मूढत्वं मूढत्वं नेति वा वक्तव्यम्।)

म० म० काणे-महोदया अपि साहित्यदर्पणटीकासु मम्मटसमर्थनं कुर्वन्ति, विश्वनाथं च निन्दन्ति। न च विश्वनाथस्य यथार्थं दोषं कमपि दर्शयन्ति। ते वदन्ति विश्वनाथस्य टीका कठोरा वर्तते। विश्वनाथः पूर्वसूरीणामुपहासं कुर्वन् स्वकीय-ज्ञानस्य प्रदर्शनं करोति। अत्रोच्यते—नैतावता मम्मटस्य काव्यलक्षणं समर्थ्यते, न वा विश्वनाथस्य दूष्यते। न च विश्वनाथेनोपहासः कृतः। 'कृतः' इत्यप्यङ्गीकृते न तेन तस्य प्रतिपादनं तर्कदुष्टमस्ति। नैव च टीकापद्धतेः कठोरत्वेन मृदुत्वेन वा टीकाया आशयः श्रेष्ठः कनिष्ठो वा भवति। तत्र भिन्ना निकर्षाः।

म० म० काणेमहोदयैर्मम्मटलक्षणे ये गुणा दर्शितास्ते ईदृशाः—मम्मटस्य लक्षणे महान् गुणो यद् दोषालङ्कारादयः सर्वैरपि सहजतया ज्ञायन्ते। तस्मात् सुलभता लक्षणस्य। रसो यद्यपीष्टः; तथापि तस्य स्वरूपं न सर्वेऽपि जानन्ति। मम्मटः स्वलक्षणेन काव्यपरिचयं झटित्येव कारयति, विश्वनाथश्च वाचकं रसचर्चाया गहनं प्रापयति। न च तल्लक्षणं विदुषस्तोषयतीति। इदं विवेचनं हेत्वाभासात्मकम्, सुलभता नाम न कदाचिद् लक्षणस्य गुणः। मम्मटः शास्त्रीयं ग्रन्थं लिखितुमुद्युक्तः। अत्र शास्त्रीयता प्रथममवधारणीया, ततश्च सुलभत्वम्। शास्त्रीयत्वमुपेक्ष्य सुलभताया अनुपयोगः। अपि च दोषालङ्कारादयः सर्वैः सहजतया ज्ञायन्त इत्यादि न सत्यम्। दोषाणां सूक्ष्मातिसूक्ष्मान् प्रकारान्, गुणविषयिणीं 'त्रयस्ते न पुनर्दश' इत्यादिचर्चां कः सुखेन जानीयात्? दोषगुणादीन् सामान्यतया सर्वेऽपि जानन्तीति चेत्, रसमपि सामान्यतया सर्वे जानन्ति, यद्यपि तद्विषयिणी सूक्ष्मचर्चा ज्ञातुं कठिना। रामकथा कारुण्यपूर्णा अस्ति, अभिज्ञानशाकुन्तले शृङ्गाररस इत्यादीनि विधानानि सामान्योऽपि कर्तुं शक्नोति। सामान्यजनानां रसविषयकं ज्ञानं दोषालङ्कारादिज्ञानापेक्षयाऽधिकं घनं वर्तत इत्येव स्वीक्रियताम्।

केचिद् वदन्ति मम्मटस्य लक्षणं बालकवीन् काव्यं कथं कार्यमिति ज्ञापयति, तन्न विचारसहम्। बालकवयोऽस्माभिरनुशासनीया इति शास्त्रकाराः कामं मन्येरन्;

तथापि तेऽनुशासनोच्छिष्टभक्षणात् कवयो न भवन्ति, अपि तु स्वयमेव कालेन काव्ययोगसंसिद्धा भवन्ति। अपि च कविर्बालो वा भवतु प्रौढो वा, तस्य कृते 'कविना सर्वथा रसपरतन्त्रेण भाव्यम्' इत्येवोपदेशः। न च काव्यशास्त्राध्ययनेन कश्चित् कविर्भवति। कश्चिद् नरः कविरस्तीत्यस्यैवार्थः स काव्यं समुचितं कर्तुं शक्नोति। न तस्य बाह्योपदेशेन कवित्वाधानम्।

एवं मम्मटस्य समर्थकानां खण्डनं कृत्वा, अथ केचित् तटस्था विचाराः प्रस्तूयन्ते। मम्मटो रसप्राधान्यं मंन्यते, ध्वनिवादी चास्ति। काव्यस्य उत्तमः, मध्यमः, अधम इति प्रकारान् स ध्वनेरनुसारं करोति। गुणदोषालङ्कारलक्षणानि, तद्विवेचनानि च रसानुसारं करोति। ध्वनिवादो रसवादश्च वस्तुनो न भिन्नौ पन्थानौ। रसो ध्वनेरेव प्रकारः। रसमाहात्म्यं रसस्वरूपं च ध्वनिवादिभिरेव यथार्थतया विवेचितम्। मम्मटश्च तदेव स्वयं करोति। तथापि च लक्षणे तयोरुभयोरपि निर्देशस्तेन न क्रियते। तदित्थमिति विश्वास एव न जायते। मम्मटः कश्चिद् जानपद इवान्यं ग्रामं गन्तुकामोऽन्यस्य ग्रामस्य प्रवासपत्रम् ('टिकेट' इति भाषायाम्) प्राप्नोतीति भासते। विश्वनाथेन तु लक्षणे, अन्यत्र च रसप्राधान्यमेव कथितम्। लक्षणे प्रगतिः, अवच्छेदको धर्मश्च वक्तव्यौ। तयोरभावाद् मम्मटस्य लक्षणमव्याप्त्यादिदोषपूर्णमिति न कस्यापि शङ्कास्थानम्। विश्वनाथस्य लक्षणं लक्षणमिति दृष्ट्या यद्यपि न निर्दोषं शक्याक्षेपं च, तथापि काव्यस्य स्वरूपं यथार्थतया निरूपयितुं प्रायोऽशक्यत्वाद् यत्र न्यूना दोषाः, तदेवाभ्यर्हितं भवति। तेन कार्यं चेद् विश्वनाथस्यैव समर्थनं कार्यम्, मम्मटविश्वनाथयोः काव्यलक्षणयोर्विश्वनाथस्यैव लक्षणं श्रेय इति दिक्। तथा च विश्वनाथस्यैव लक्षणमधिकं प्रसिद्धिं गतमस्तीत्यपि नास्ति विस्मयास्पदम्।

## प्रयोजनम्

"प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इत्यादिभिर्वाक्यैः प्रयोजनस्य महत्त्वं प्रतिपादितमेव। काव्यप्रयोजनमिति यो द्वितीयो महत्त्वपूर्णो विषयस्तत्र संस्कृतकाव्यशास्त्रज्ञेषु न महान् विवादः कुत्रचिद् विद्यते। न चापि विविधाः पक्षा उपन्यस्ताः। तथापि च मम्मटविश्वनाथयोः काव्यप्रयोजनविचारो विशेषेणावधानार्हः। तयोर्मम्मटस्य काव्यप्रयोजनविचारो बहुभिः सुविस्तरः प्रपञ्चितोऽस्ति। तस्य च प्रयोजन-

विषयकाणि मतानि संस्कृतकाव्यशास्त्रज्ञानामेतद् विषयस्य यानि मतानि, तेषां प्रतिनिधिभूतानि। तस्य विचारस्यैव विवरणे बहूनां रुचिः। तेन तस्य सविस्तरं विवरणमकृत्वा विश्वनाथस्यैव काव्यप्रयोजनचर्चां विस्तरेण कुर्मः। ततश्च तौलनिकविचारान् स्थापयामः।

विश्वनाथो लक्षणचर्चायाः प्राक् प्रयोजनचर्चां प्रारभते। स लिखति—

चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निगद्यते॥

अस्याः कारिकायास्तेनैव कृतं स्पष्टीकरणं संक्षेपेण स्थाप्यते—काव्याच्चतुर्वर्गावाप्तिः। कथं तर्हि काव्ये भगवन्नारायणादिस्तवः? तेन धर्मप्राप्तिः; उदाहरणार्थम्—गङ्गालहरी, शिवमहिम्नःस्तोत्रमित्यादीनि। अपि च व्याकरणमहाभाष्ये उक्तम्—"एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति।" अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। (श्रीहर्षाद्धावकादीनामिव।) कामप्राप्तिश्चार्थद्वारा, तथा चोक्तं महाभारते—

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति माम्।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते॥ इति।

मोक्षप्राप्तिश्चैतज्जन्यफलानुसन्धानात्, यथा च भगवद्गीतासु—

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।

सत्यं नाम वेदशास्त्राद्यध्ययनैरपि चतुर्वर्गप्राप्तिः, परं सा नीरसतया दुःखादेव परिणतबुद्धीनामेव च जायते। अपि तु सरसतया सुखादेव अल्पबुद्धीनामपि काव्यादेव चतुर्वर्गावाप्तिः। बुद्धिंसतामपि काव्यमभ्यर्हितम्। कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे सितशर्कराप्रवृत्तेरेव साधीयस्त्वात्। एतादृशी विश्वनाथस्य विचारसरणिः।

इदं सर्वमेव विवेचनं सूक्ष्मतया परीक्षितव्यमस्ति। तदा बहव आक्षेपाः शक्याः। प्रथमं तावद् विश्वनाथः कविरसिकानां प्रयोजनभेदं न सूचयति। धर्मादिप्राप्तिरुभयोरपि शक्यत इत्युच्यत इति चेन्न; यतोऽर्थरूपः पुरुषार्थः (तद्द्वारा च कामः) कविगत एव, न रसिकगतः। परमल्पबुद्धीनामपि पुरुषार्थलाभः काव्यादित्युपक्रमे कृतेऽर्थप्राप्तिरपि रसिकस्येत्यापतति। यतः कवयो नाल्पबुद्धय इति वर्णनमर्हन्ति।

( यद्यपि शास्त्रेषु हीनाः कवयो भवन्तीति तेषामुपहासः । ) कवेः प्रज्ञा, नवनवोन्मेष-शालित्वम्, अनुभव इत्याद्यावश्यकमेव । तेन अल्पधीरिति न कविविशेषणम् । एवं रसिकप्रयोजनानां कविप्रयोजनानां चाक्षम्यः सङ्करः कृतो विश्वनाथेन । एवं सङ्करे संजाते न वयम् "यथायोगं कवे रसिकस्य च" इत्येवं विभाजनं कर्तुमीशाः ।

अपर आक्षेपः—प्रयोजनफलयोः क्षेत्रनिर्णयो न कृत इति । अयं तु आक्षेपोऽन्येष्वपि काव्यशास्त्रीयग्रन्थेषु शक्यः । तस्माद् विश्वनाथस्योपरि न तीव्रतया क्रियते । प्रायेण संस्कृते आलङ्कारिकाः प्रयोजनं फलं चेति शब्दौ पर्यायाविव प्रयुञ्जते । एकेन लब्धं फलं दृष्ट्वा अपरस्तत् प्राप्तुमीहते । तेन तस्य विषये तत् प्रयोजनं भवति । तस्मात् प्रयोजनफलयोर्भिन्नत्वस्याप्रतिपादनं नाम न महान् दोष इति समर्थनं शक्यम्; तथापि सूक्ष्मेक्षिकया विचार्यमाणे इदमपि दृश्यते यत् कविना यन्नापेक्षितं तदपि स कदाचित् प्राप्नोति, यच्चापेक्षितं तन्न प्राप्नोति । एवमेव रसिक-विषये इत्यतः प्रयोजनफलयोर्भेद आवश्यक एव । विश्वनाथेन त्वयं भेदो न कृतः ।

विश्वनाथेन या धर्मादिप्राप्तिः कथिता, साऽप्यत्यन्तं दूरान्विता, चतुर्वर्गकल्प-नाया महत्त्वं प्राचीनभारतीयजीवने वरीवर्तीति ज्ञायते । जीवनस्य ध्येयं साफल्यं च तदेव । काव्यप्रान्तेऽपि तदानीय काव्यस्य प्रयोजनवत्त्वं विश्वनाथः श्रुतिस्मृतिप्रामाण्य-वादिनः प्रति प्रतिपादयतीति दृश्यते । अथवा केचित् पण्डिताश्चतुर्वर्गप्राप्तये यत् तदेव साध्विति मन्यमानाः काव्यं निरर्थकमिति सूचयन्तः स्युः, तान् विश्वनाथः काव्यस्यापि चतुर्वर्गफलाधिगमे साधनत्वं कथयतीति भाति । यत् किमपि वा भवतु विश्वनाथस्योद्दिष्टम्, तस्य चतुर्वर्गप्रापकं काव्यमिति विवेचनं दूरान्वितमिति स्पष्टम् । दृश्यताम्—

काव्याद् धर्मप्राप्तिरिति विश्वनाथः । यतस्तत्र देवतास्तुतिः । परं कति नाम काव्यानि यत्र देवतास्तुतिर्विपुला वर्तते ? मङ्गलाचरणानि, स्तोत्रकाव्यानि ( कानिचन एव गङ्गालहर्यादिस्तोत्राणि काव्यपदवीमर्हन्तीति स्पष्टम्, न सर्वाणि ) इति कश्चिदंशो वर्जितश्चेद् बहुभागस्तु देवतास्तोत्रैरसंबद्धः । प्रायो व्यभिचारवर्णनपरा गाथासप्तशती किं धर्मप्राप्तये ? नैव, तावता किं सा न काव्यम् ? बाढं काव्यमेव । तर्हि कोऽयं धर्मसमावेशदुराग्रहः ? बहवश्च कवय उत्तमं काव्यं कृतवन्तोऽप्येकमपि शब्दं सम्यक्तया न ज्ञातवन्तः ।

अर्थप्राप्तिस्तु प्रत्यक्षसिद्धेत्युक्तम्, परममिदं गौणं प्रयोजनम्; न सर्वेऽपि कवयोऽर्थं लभन्ते। कालिदासादयः कवयो यशोधना धनविषये उदासीनाः। कालिदास आत्मानम् 'यशःप्रार्थी' इति वर्णयति। कीर्तिरिति काव्यप्रेरणायां महत्त्वपूर्णो घटकः। तस्योल्लेखमपि विश्वनाथो न करोति। वृत्तिपुष्टाः कविन्नुवा आसन् पुरातनकाले, सन्ति च येऽर्थप्राप्तये काव्यं कुर्वन्ति। न च तेषां काव्यं श्रेष्ठमस्त्येवेति नियमः। तेनार्थप्राप्तिरूपं प्रयोजनं गौणम्। रसिकेनार्थप्राप्तेश्च संबन्धो नेत्युक्तमेव। (यदि स्यादर्थहानेरेव स्यात्)।

काव्यात् कामप्राप्तिरिति त्वतीव विस्मयावहं हास्यास्पदं च। किं काव्येन योऽर्थो लब्धस्तेनैव कामप्राप्तिः? अर्थप्राप्तेः, तद्द्वारा च कामप्राप्तेः किं साधनान्तराणि न सन्ति? काव्येन येषां सुतरां न संबन्धः, एतादृशा निरक्षराः सामान्यजना अपि किम् अर्थं कामं च न लभन्ते? कामप्राप्त्यर्थमर्थः काव्यद्वारैवेतीयं विचित्रा कार्यकारणपरम्परा। रसिकस्य तु काव्यद्वाराऽर्थप्राप्तेरसम्भवात् कामप्राप्तिरपि नेत्यप्यापतेत्, तत् त्वयुक्तम्।

मोक्षप्राप्तिः काव्यादित्यपीत्थमेव विचारसहं न। उत्तमः कविरपि कामक्रोधादिपूर्णः सन् यद्यपि दुर्दैववशाद् अर्थं धनं च न लभते, तर्हि स मोक्षमर्हति किम्? मोक्षस्य करणं ज्ञानमेव। कर्मफलत्यागस्तत्पूर्वभाव्यवस्थामात्रं स्यात्। अपि च न केवलं काव्यगतकर्मफलत्यागः, अपि त्वन्यक्षेत्रगतकर्मफलत्यागोऽपि मोक्षार्थमिष्टः। तेन केवलं काव्याल्लप्स्यमानस्यार्थकामादिकस्य त्यागेन मोक्ष इति कथने न तात्पर्यमस्ति। ज्ञानं विना तु मोक्षाभावात् कर्मफलत्यागोपदेशो गुणीभूत एव।

आस्तां तावदयं पुरुषार्थविचारः। स तु पुरुषार्थो येनाधिकारिणा प्राप्यते, तस्य स्वरूपं किम्? प्रायो मन्दबुद्धित्वमेव। अयमल्पधीरध्ययनपराङ्मुखो बालः। ईदृशोऽपि बालः काव्यप्रान्ते यथेष्टसञ्चारी सन् मोक्षादिकमर्हति तर्हि हन्त! विफलोऽध्ययनप्रयासः, व्यर्था अर्थोपार्जनपद्धतयः, निःसारं ब्रह्मज्ञानम्। अपि च पृच्छ्यते, किं सर्वाण्यपि काव्यानि सुखेनार्थं प्रसुवते? येनायं बालोऽल्पधीरपि तदर्थं ज्ञातुं प्रभवेत्? अपि च किं कालिदासादीनां काव्यस्य शब्दार्थग्रहणमेव काव्यरसास्वादः?

अथवा तस्य कृते बुद्धेः प्रौढत्वम्, रसिकता, सुसंस्कृतता, जीवनानुभव इत्यादयो गुणा अपेक्ष्यन्ते ?

कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षाद् विदुः ( नान्ये तु मादृशाः ) ॥

इत्युक्तिः किं नार्थवती ? कथमल्पधियः सुखेनैव सर्वम् 'व्यङ्ग्य'रसमास्वादयितुं शक्नुवन्ति ?

परमेतेभ्यः सर्वेभ्योऽप्याक्षेपेभ्यो मूलभूतोऽयमाक्षेपो यद् विश्वनाथः काव्यस्यानन्दप्राप्तिरूपं प्रयोजनं न कथयति, तच्च यदा कथयति तदापि सर्वप्रयोजनमौलिभूतं प्रयोजनमिदं विश्वनाथः—"चतुर्वर्गफलप्राप्तेः सुकुमारबुद्धीनामपि सुखेन संभवः" इति वाक्ये गौणं कृत्वा कथयति । "परमानन्दसंदोहजनकतया सुखादेव सुकुमारबुद्धीनामपि काव्यादेव" इति । आनन्दरूपस्य प्रयोजनस्य विश्वनाथेन कृता ईदृशी दशा । एवं यथा यथा विश्वनाथस्य काव्यप्रयोजनविचारं परीक्षामहे, तथा तथा तस्यावस्था सिकताकूपवद् भवति ।

अत्र काव्यलक्षणानां विकासो द्रष्टव्यः । "शब्दार्थौ सहितौ काव्यम्" ( भामहः ), "रीतिरात्मा काव्यस्य" ( वामनः ) इत्येतादृशानि काव्यलक्षणानि काव्यस्य रसरूपमात्मानं न स्पृशन्ति । ध्वनिकारेण यद्यपि रसप्राधान्यं शतशो निरूपितम्; तथापि रसो ध्वनेरेव 'एकः' प्रकार इति कृत्वा "ध्वनिरात्मा काव्यस्य" इति सूचितम् । ध्वनिकाराणामेव सिद्धान्तं दृढीकुर्वन् मम्मटो रसमेवात्मानं नैकधा वदन्नपि काव्यलक्षणे प्रमादादिव "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति कथयन् काव्यात्मानमुपेक्ष्य यत्किञ्चिद् वदति । समग्रेऽपि संस्कृतसाहित्यशास्त्रे विश्वनाथ एव रसं प्रथमतया काव्यलक्षणे निवेश्य ध्वनिकाराणामभिप्रायं दृढमकरोत् । "रसश्चास्वादजीवातुः, रसो ब्रह्मास्वादसहोदरः" इत्यपि विश्वनाथेनोक्तमेव । तेन रसमेतादृशेनाभिनिवेशेन प्रधानपदे स्थापयतो विश्वनाथस्येदं प्रथमं कर्तव्यमासीद् यत् "सद्यः परनिर्वृतिरेव काव्यस्य प्रयोजनम्, अन्यानि प्रयोजनानि गौणानि । केवलं शास्त्रपरिपूर्त्यर्थं तेषां चिन्ता" इति स्थापनम्, परं तदेव तेनोपेक्षितम् । इयमुपेक्षा नास्माभिरुपेक्षणीया ।

अथ मम्मटविश्वनाथविषये एकं तौलनिकं विचारं स्थापयामः। संस्कृतकाव्यशास्त्रे प्रयोजनविचारो मम्मटेन यादृशः शास्त्रशुद्धः कृतस्तथा न केनापि। मम्मटस्यैतिहासिकदृष्ट्या ये महत्त्वपूर्णा गुणास्तत्र ध्वनिप्रस्थापनमिव काव्यप्रयोजनस्य शास्त्रीयो विचार इत्यप्येकः। मम्मटविश्वनाथयोस्तौलनिकेऽध्ययनेऽयं विचारोऽत्यन्तमहत्त्वपूर्णो यन्मम्मटः 'काव्यलक्षण'–रूप–'परीक्षा'यामनुत्तीर्णः, परं प्रयोजनविचारे प्रथमक्रमाङ्कितः। विश्वनाथस्य स्थितिरेतस्य संपूर्णं विपरीता। स तु प्रयोजनेऽनुत्तीर्णः, लक्षणे उत्तीर्णः। ( यद्यपि तस्य लक्षणं न संपूर्णतया आक्षेपमुक्तं निर्दोषं च तथापि )॥



# सांख्यसम्मतं रसदर्शनम्

श्रीउमाशङ्करमिश्रः, साहित्यविभागाध्यक्षः, ऋषिकुलविद्यापीठम्, हरिद्वारम् ।

आप्यायन्तीं जगत्कृत्स्नं प्रक्षरन्तीं रसामृतम् ।
चन्द्रमूर्तिं प्रभोर्वन्दे सरसां सुमनोहराम् ॥

संस्कृतसाहित्ये नैकेषु विषयेषु यथा कालविमर्शावसरे प्रबलतमपोषकप्रमाणाभावान्नैव नैश्चित्येन किञ्चिदपि वक्तुं सुशकम्, तथैव सांख्याभिमतरसदर्शनस्य कस्तावदाविष्कर्ता ? के च तदनुयायिनः ? कश्च तेषां रसदर्शनविमर्शकालः ? इत्यादयोऽनुयोगा अपि प्रायशो दुरुपपादा एव, किन्तु रसदर्शनस्यैतिहासिककालक्रमदृष्ट्या सूक्ष्मेक्षिकया पर्यालोचनेनाऽभिनवगुप्तपादाचार्येभ्यः प्राक् किमपि सांख्यसम्मतं रसदर्शनमासीदिति सुतरामायाति । तदेव रसदर्शनमभिनवभारत्यां भट्टनायकसम्मतरसदर्शनोपन्यासात् प्राक्, अथ च श्रीशङ्कुकाऽभिमतरससूत्रव्याख्यानान्तरम्, भट्टनायकात् प्राक् सांख्याभिमतरसदर्शनस्य काल इत्यस्माभिः स्वीकर्तुं शक्यते । किञ्च, 'येन' इत्येकवचनोपन्यासेनाऽनायासेनैवास्याऽसारत्वम्, अथ चास्य रसदर्शनस्यासीत् कश्चन समुद्भावकः, परं नैकोऽपि तदनुयायीति सुविशदमेवाऽस्माभिः परिलक्ष्यते ।

इदं च चिरन्तनरसचिन्तनचेतनायां सांख्याभिमतं रसदर्शनमभिनवगुप्तपादाचार्यप्रणीताभिनवभारत्यां हेमचन्द्रस्यालङ्कारचूडामणौ चोपलभ्यते, नान्यत्र कुत्रापि निखिलेऽपि प्राचीनतमे संस्कृतवाङ्मये । अभिनवगुप्तपादाचार्यपरवर्तिनः प्राचीना रसविमर्शका आधुनिकाः प्राच्याः पाश्चात्त्याश्च रसतत्त्वसमीक्षकाः प्रायेण नेदं रसदर्शनं विचारकोटौ स्थापयन्ति । किम्बहुना, यद्यपि रसगङ्गाधरे पण्डितराजजगन्नाथेन तदानीं रससमीक्षाक्षेत्रे वर्तमानानामाचार्याणां रसदर्शनं संगृह्य तत्तन्मतपरतया रससूत्रव्याख्यानं सम्पाद्य तेषां रसदर्शनानां युक्ताऽयुक्तत्वविमर्शोऽप्यतीव सूक्ष्मेक्षिकया यथाऽपेक्षितं समुपपादि, किन्तु तेन पण्डितेन्द्रेणाप्यस्य रसदर्शनस्य चर्चापि न विहितेति दुःखावहोऽयं विषयः ।

यद्यपि "दूषणाविष्करणमौर्ख्यात्" इत्यभिनवगुप्तपादाचार्योक्तदिशा सांख्याभिमतरससूत्रविमर्शस्याप्रामाणिकत्वं सर्वथा सिद्धमेव, किन्त्वैतिहासिकक्रमदृष्ट्या रसदर्शनस्य विकासविवेचनाऽवसरे सांख्याभिमतरसदर्शनविमर्शः सर्वथाऽपेक्षितो वर्तत इति न केनाप्यपलापः कर्तुं शक्यते। यतो हि सांख्यसिद्धान्तीये भट्टनायकव्याख्याने सांख्यदर्शनस्य कियान् प्रभाव इति न तिरोहितं रससारविदामालङ्कारिकाणामिति। अत एवास्याऽपसिद्धान्तत्वं जानद्भिरप्यभिनवगुप्तपादाचार्यैः सांख्याभिमतरससूत्रव्याख्यानं विहितम्।

तत्र सांख्याभिमतरससूत्रविमर्श इत्थमधुना समुपलभ्यते—

"सुखदुःखजननशक्तियुक्ता विषयसामग्री बाह्यैव, सांख्यदृशा सुखदुःखस्वभावो रसः। तस्यां च सामग्र्यां द(त)लस्थानीया विभावाः। संस्कारका अनुभावव्यभिचारिणः, स्थायिनस्तु तत्सामग्रीजन्या आन्तराः सुखदुःखस्वभावाः" इति। (हेमचन्द्रस्य काव्याल० चू०, पृ० ९६)।

इत्थं चात्र विषयत्रयप्रतिष्ठापनमस्माभिः सांख्याभिमतरसदर्शनेऽवलोक्यते—

(क) विभावादीनां दलस्थानीयत्वप्रतिष्ठापनम्।

(ख) अनुभावव्यभिचारिणां संस्कारस्थानीयत्वम्।

(ग) स्थायिभावो नाऽन्तःकरणविषयः, अपि तु बाह्यविषयसामग्रीजन्यः।

अतोऽस्मिन् रसदर्शने रसस्थायिभावयोरधिष्ठानभेदेनान्योन्यभेदः सुतरां परिदृश्यते। अथ च "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति महामुनिभरतप्रणीतरससूत्रानुसारमेव सांख्यरसदर्शनप्रतिष्ठापकेन स्वकीयेऽपि रसदर्शने विभावानुभावव्यभिचारिणामिति त्रयाणामेव प्रकारान्तरेण सन्निवेशोऽकारि।

परमार्थतस्त्वस्य रसदर्शनसमुद्भावकस्याऽयमेवाभिप्रायो यथा वनस्पतिदलनिष्यन्दरूपं रसमाकृष्य तत्र नानाद्रव्यौषधसंस्करणात् कश्चनापूर्वपेयो मधुरो रसः सञ्जायते, तथैव नाटकादावपि ललनोद्यानभ्रमरझङ्कारचन्द्रिकादिबाह्यविषयसामग्रीप्रभावेण सुखदुःखमोहस्वरूप आह्लादः सुतरां नैसर्गिकः। किञ्च, यथा महामुनिना भरतेत पाकरसदृष्टान्तोपन्यासेन नाट्यरसदर्शनं सुप्रतिष्ठापितम्, तथैवाऽनेन सांख्य-

६

वादिनापि वनस्पतिदलनिष्यन्दरसनिदर्शनेन नाट्यरसदर्शनव्यवस्थापनाय प्रयासो विहितः। अपि च "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" इति सांख्यदृशा प्रकृतेस्त्रिगुणात्मकत्वाज्जगति विद्यमानानां सर्वेषां पदार्थानां सुखदुःखमोहात्मकत्वं सर्वात्मना सिद्ध्यति। अस्मिन् मते सर्वेऽपि जागतिकाः पदार्था भोक्तुरन्तःकरणे तद्गतसत्त्वरजस्तमसां स्थितेरनुरूपमेव सुखदुःखमोहोत्पत्तये सर्वथा समर्थाः। यथा लावण्यामृतपरिस्राविता रूपवेषविन्याससमलङ्कृता चन्द्रचन्द्रिकेव सकलजनमनःप्रमोदकारिण्यपि नवयौवना स्वकीयप्रियतमप्रणयदायिनी, अपि च सपत्नीजनानां कृते दुःखातिशयदायिनी, अन्येषां चाप्राप्तमनोरथानां कृते नितरां मोहदायिनी भवति।

अत एव सांख्यदृष्ट्या प्रकृतेर्बाह्यपदार्थाः स्वत एव सुखदुःखमोहस्वभावाः, अथ च भोक्तुरन्तःकरणे सुखदुःखमोहानामुत्पादने च सर्वथा शक्तिसम्पन्नाः। किं बहुना, सांख्यवादिनां सत्कार्यवादसिद्धान्तानुसारं जगति न किमपि जायतेऽभिनववस्तु, प्रत्युत विद्यमानानां तत्त्वानां घटप्रदीपवदेवाभिव्यक्तिमात्रं जायते। अतोऽस्मिन् रसदर्शने सुखदुःखमोहोत्पत्तेरयमभिप्रायः—सुखदुःखमोहानां बाह्यविषयसामग्रीसंसर्गेणाभिव्यक्तिरिति। इत्थं चानेन सांख्यवादिना स्वकीयरसदर्शनविचारानुरूपमेव बाह्यविषयाणां सुखदुःखमोहस्वभावात्मकत्वं सुखदुःखमोहजननशक्तियुक्तत्वं च समर्थितम्। इयं बाह्या विषयसामग्री एव रस इत्येतद्रसदर्शनरहस्यम्। यतो हि सांख्यवादिनां मते या सुखदुःखमोहात्मिका बाह्या विषयसामग्री सैव सहृदयहृदयान्तराले यथाक्रमं सुखदुःखमोहान् समुत्पादयति। अतोऽस्मिन् मते बाह्या विषयसामग्री एव रसः, न तु स्थायिभावो रस इति। अत एवात्र रसस्थायिभावयोरन्योन्यं मौलिको भेदः सुतरां परिलक्ष्यते, किन्तु "स्थायिभावान् रसत्वमुपनेष्यामः" इति मुनिवचनानुसारं रसस्थायिभावयोर्न मौलिको न वा कश्चन जातिगतो वा भेदो भवितुमर्हतीति सर्वे प्रामाणिका रसविमर्शका आमनन्ति। अत एतन्मतं सर्वथा मुनिसिद्धान्तविरुद्धमेव। पूर्वोक्तमुनिमतविरोधं जानताप्यनेन रसदर्शनसमुद्भावकेन "यत्तु मुनिना रसस्थायिभावयोरभेदाङ्गीकरणं तत्त्वौपचारिकम्" इति मत्वा रसस्थायिभावयोरन्योन्यभेद एवोररीक्रियते। अखण्डि चैतद्रसदर्शनमभिनवगुप्तपादाचार्यैः— "येन त्वभ्यधायि सुखदुःखजननशक्तियुक्ता विषयसामग्री बाह्यैव। सांख्यदृशा

सुखदुःखस्वभावो रस इति तेन 'स्थायिभावान् रसत्वमुपनेष्यामः' इत्यादावुपचार-मङ्गीकुर्वता ग्रन्थविरोधं स्वयमेवाबुध्यमानेन दूषणाविष्करणमौर्ख्यात् प्रामाणिकजनः परिरक्षित इति किमस्योच्यते" ( हेमचन्द्रस्य अलं० चू०, पृ० ९६ )।

अनेन प्रकारेण "दूषणाविष्करणमौर्ख्यात् प्रामाणिकजनः परिरक्षित इति किमस्योच्यते" इति समुद्घोषेणास्य रसदर्शनस्य सर्वथा वदतो व्याघातत्वं सर्वात्मना परिभाव्याभिनवगुप्तपादाचार्येण कश्चन विशिष्टो विमर्शो न संपादितः। न च तत्पर-वर्तिनापि केनापि शेमुषीसंपन्नेन मौलिकरसचिन्तकेनैतद्रसदर्शनं परिशीलितम्। अतो न कथमपि विचारपेशलमेतद्रसदर्शनमिति ॥



# √अग् : अर्थविवेचना

डा० भागीरथप्रसादत्रिपाठी, वा० सं० वि० वि०, वाराणसी ।

√अग् (अग) १/७८७ कुटिलायां गतौ (प)<br>
श × क्षी-मै-सा-च-जै-कात-शा ।<br>
वक्रगते—वो ।<br>
अकवत् (=कुटिलायां गतौ)–हे ।<br>
(काक्र— √अज्) कुटिलायां गतौ—काक्र ।

√अग् १/४१० i आदाने (आ) काक्र ।<br>
√अक् (अक) १/७८६ कुटिलायां गतौ (प) ।<br>
√अख् (अख) १/३८a गतौ (प) काक्र ।<br>
√अज् (अज) १/२२६ गतिक्षेपणयोः (प) ।<br>
√अङ्क् (अकि) १/८४ लक्षणे (आ) ।<br>
√अङ्ग् (अगि) १/१४५ गत्यर्थः (प) ।<br>
√अङ्घ् (अघि) १/१०५ गत्याक्षेपे (आ) ।

कुटिलगत्यर्थकस्य √अग् इति धातोर्नोपलभ्यन्ते तिङ्रूपाणि । ऋग्वेदे "अग्निनाग्निः समिध्यते" १, १२, ६ इत्यत्राग्निशब्दप्रयोगः । अग्निशब्दमूले √अग् धातुर्निश्चयतः संनिविष्टः । "अङ्गेर्नलोपश्च" (४/५०) इत्युणाद्यनुसारेण प्रकृतशब्दस्य √अङ्ग् (अगि) धातोर्व्युत्पादनप्रसङ्गे नलोपविधिः । वस्तुगत्या √अग्, √अङ्ग्-प्रभृतिधातूनां मिथः संक्रमः । √अग्-धातु-संवद्धानां साक्षादाहोस्विदसाक्षाद्रूपेण विकासमापन्नानां धातूनां व्यूहो दक्षिणतो व्यवस्थापितः । अनया प्रस्तूयमान-सामग्र्या तुलनात्मकपरिशीलनशीलजनानां स्यात् सौविध्यं विकासश्रृङ्खलायाः प्रव्यक्ततया' सत्रेत्याशासे ।

अग्राग्निप्रत्यग्रादिशब्दानां मूले √अग् धातोर्विद्यमानत्वस्य निदिध्यासनेन सूल्बणं प्रतीयमानत्वात् । रस्य नेश्च प्रत्ययत्वात् । यो ध्वनिरनेकत्र समानरूपेणानुगतः, स एव ध्वनिर्ध्वनिसमूहो वा धातुरूपत्वेन निश्चेयः । भवति, बभूव, अभूत्, भूतिर्भूतम्—इत्यादिस्थलेषु 'भू' इति 'भव्' इति च द्वे प्रकृती प्रतीयेते । कतरा ग्राह्येति द्वापरः । एवं विचिकित्सायां क्तिन्विशिष्टस्य शब्दस्य ध्वनयोऽवधेयाः सादरम् । तत्र धातोर्वास्तविकं स्वरूपं द्रक्ष्यते । तदेव समनुध्याय कल्पिता धातवः

शब्दविद्भिः; भूतिः, भूतम् इत्यत्र भूधातोः सुव्यक्तत्वात्। यद्यपि विद्यन्ते भूयांस्यपवादस्थलानि हत-गत-मूर्तप्रभृतीनि; तथापि प्राज्यस्य प्राथम्येन सह्यता। अग्निरित्यस्य √अङ्ग् (अगि) धातोर्व्युत्पादने गौरवम्, तदर्थकस्य √अग् धातोर्विद्यमानत्व ात्।

अनेकैः क्रियते पृच्छा—धातोरनेकार्थानां कथं संभव इति। अर्थनैयत्यं भाषाया व्यवस्थापकतासूचकम्। अत्रोच्यते, कर्त्रनुगतो व्यापारः। कस्यापि कर्तुर्भवन्त्यनेके व्यापाराः। अग्निशब्द एव निदर्शनार्थतया ग्राह्यः। इह द्युति-तिर्यग्गति-दाह-ताप-नाशन-ग्रहणादयो भूयिष्ठा व्यापाराः समवस्थिताः। वैयाकरणैर्लक्ष्यभूतशब्दो यस्मिन्नर्थे समधिगतस्तच्छब्दानुमितो धातुरपि तस्मिन्नेवार्थे पठितः। अत एव कारणादनूनकैरपि वैयाकरणैर्धातोस्तुल्यार्था न प्रतिपादिताः। तत्तच्छब्दानां यावन्तो व्यापारास्तैर्लक्षितास्तावन्तोऽर्था निदर्शिताः। केनचित् तनीयांसो व्यापाराः साक्षात्कृता इति तथार्थाः संकीर्तिताः; अपरेण तु भूयिष्ठाः साक्षात्कृता व्यापारा इत्यर्था अपि तथा व्याहृताः। निरीक्ष्यताम्, अग्नेर्भासनाद्यर्थत्वेऽपि न व्यधायि केनापि तदुल्लेखः। काशकृत्स्नेनैव किलादानार्थो निरूपितो नेतरैः।

मेदिनीकोशानुसारेण 'अग्र' शब्दो नवस्वर्थेषु प्रयुज्यते। ते चेमे[१]—१. पुरस्तात्[२], २. उपरि, ३. पलपरिमाणम्, ४. आलम्बनम्, ५. समूहः, ६. प्रान्तः, ७. अधिकम्, ८. प्रधानम्, द्र० प्राग्रम्, प्राग्र्यम्, ९. प्रथमम् इति। *भारोपीयभाषायाम् अग्रो (agro) अथवा ऑग्रो (ogro) इति शब्दस्यार्था भवन्ति—१. निशितः कण्टकः, (२. उच्चम्, प्रथमम्), ३. अग्रम् इति वाल्दे-पॉकर्नीः। अवेस्ताभाषायाम् (aɣra) शब्दस्त्रीनर्थानभिव्यनक्ति—१. उच्चम्, २. परिधिः, ३. स्थानं च। विद्यमानेष्वप्येतेष्वर्थेषु न कोऽपि वैयाकरणतल्लज उपस्थापितवानिमानर्थान् अग्-धातुप्रसङ्गे वै। हेतुश्चात्र वैरल्य-

---

१. अग्रं पुरस्तादुपरि परिमाणे पलस्य च॥ ३॥
आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्।
अधिके च प्रधाने च प्रथमे चाभिधेयवत्॥ ४॥

२. आ नखाग्रेभ्यः—बृहदारण्यकोप. १,४,७।
मेदिनी०, १२३ पृ० (चौ० सं०)।

मेवैतेषामर्थानाम् । नैते ह्यनुगता अनेकत्र । आधिक्यतोऽनुपक्तोऽर्थस्तु कुटिलगतिरेव सर्वत्रेति तदुल्लेखः । (१/१३) निरुक्ते 'अग्रु' इति नद्यर्थकः । एषोऽङ्गुल्य-भिधायकोऽपि—( निरु० २/५ ) । अग्रुशब्दस्योक्तार्थौ कुटिलगत्यात्मकौ । नदी वहत्येव कुटिलम् । अन्तरेणारालतामङ्गुलिरप्यनर्हाऽनुष्ठातुं शक्त्यपेक्षाणि कर्माणि । एवञ्जातीयकेषु कार्येषु कुटिलगतिमत्ता तदीया सुनिभालनीया । निघण्टुरुपस्थापयति संग्रामार्थकं शब्दम्—'अग्मन्' इति । एतदीयः संग्रामरूपोऽर्थ इङ्गति कुटिल-गत्यर्थकताम् । व्यालीढान्तरणे रणे वृजिनगमनं नितान्तमपेक्ष्यते । एवमेव 'अग्र'-शब्दस्योच्च-प्रथम-परिधिरूपार्था अवधेयाः । उच्चताप्तये सामान्यजनाग्राह्या नतगति-राश्रयणीया भवति । धातोर्गतिमात्रार्थकत्वे सति गमने=ज्ञाने नूनं प्राथम्येनोच्चता । हिन्दीभाषायाम् √अगरना* अग्रगमनार्थिका, √अगुआना ( < अग्रगू- ) अग्र-करणार्थिका चेति धातुद्वयी लभ्यते । √अग्र्-धातोः प्रतिपादितचरा अर्था बोध-नीया ऋत उपसर्गयोजनायाः ।

इदानीमुपसर्गयोजनाद्वारकार्थपरिवर्तनं विवेच्यते । उपसर्गसाहचर्येण धात्वर्थो बलादन्यत्र नीयते[2] मतानुसारेण शब्दविद्बुधानाम् । त्रैविध्यं[3] चोपसर्गगतेर्निरूप्यते—१. धातोर्निश्चितार्थबाधः, २. सत्यामप्युपसर्गयोजनायामुपसर्गद्वारकं धातोर्निश्चितार्थानु-वर्तनम् । ३. धातोर्निश्चितार्थविशेषणं चेति । यद्यप्यग्रशब्दोल्लेखः समं सप्तोप-सर्गैः; तथापि तदर्था भवन्ति पञ्चैव—

क. प्र—प्राग्रम्, प्राग्र्यम्=प्रधानम् । इह प्रोपसर्गो धात्वर्थमनुवर्तते, अग्रशब्दस्य प्रधानरूपार्थत्वात् ।

---

१. अगी गत्य—अत्थ धातु—धातुमञ्जरी ३२ ।

२. उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥

३. धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
विशिनष्टि· तमेवार्थमुपसर्गगतिस्त्रिधा ॥

ख. सम—समग्रम् = संपूर्णम् । उपसर्गोऽयं धात्वर्थबाधकः । अग्रशब्दस्य समूहार्थकत्वे तूपसर्ग एव विशेषणतां प्रतिपत्स्यते । सम्यक् समूह एव संपूर्णताद्योतक इति ।

ग. अव—अवाग्रम् = अवनतम् । अग्रशब्दस्यार्थ उपरीत्यपि । अवोपसर्गयोजनायां तदर्थो वैपरीत्यं पेदे—आनतमिति । आनतं च कुटिलगतिमतिरिच्य न किमपीत्ययं धात्वर्थानुवर्तकः ।

घ. वि—व्यग्रम् = व्याकुलम् । विशेषतोऽग्रेऽग्रे धावनं संकेतयति व्याकुलताम् ।

ङ. उत्—उदग्रम् = उन्नतम् । उपसर्गोऽयं विशिनष्ट्युपर्यर्थम् ।

च. (१)अभि—अभ्यग्रम् = नवीनम् (भट्टि० ६/२८) अग्रशब्दो हि प्रथमार्थकः । यश्च प्रथमतः साम्मुख्यमेति स नावीन्यं भजते । उपसर्गोऽयं धात्वर्थबाधकः ।

च. (२) अभि—अभ्यग्रम् = समीपम् ( अ० को० ३,१,६७ ) । अग्रतः सति साम्मुख्ये सामीप्यम् ।

छ. प्रति—प्रत्यग्रम् = अभिनवम् ( प्रत्यग्रं शृणीहि—ऋ. ३,३०, १७) । द्र० अभ्यग्रम् ।

वैयाकरणैरुपसर्गार्थाः पार्थक्येन नोरीकृता धातुतः । कस्यचन धातो रूपाणि समीक्ष्य तन्निखिलार्थानां कुतो न युगपज्ज्ञानम् इति जिज्ञासायामुदाह्रियते दीपकः[१] । दीपादिद्युतिः पर्वतस्य तमेव भागं प्रकाशयति यत्र तदीया स्थितिः । पर्वतीया अन्ये कोणा अवतिष्ठन्ते तिमिरावृताः । एवमेवानेकार्थत्वेऽपि धातूनामुपसर्गरूपदीपसहकारेण

---

१. सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ।
विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥
(शिशुपाल० १०।१५)

मेवैतेषामर्थानाम् । नैते ह्यनुगता अनेकत्र । आधिक्यतोऽनुपक्तोऽर्थस्तु कुटिलगतिरेव सर्वत्रेति तदुल्लेखः । ( १/१३ ) निरुक्ते 'अग्रु' इति नद्यर्थकः । एषोऽङ्गुल्यभिधायकोऽपि—( निरु० २/५ ) । अग्रुशब्दस्योक्तार्थौ कुटिलगत्यात्मकौ । नदी वहत्येव कुटिलम् । अन्तरेणारालतामङ्गुलिरप्यनर्हाऽनुष्ठातुं शक्त्यपेक्षाणि कर्माणि । एवञ्जातीयकेषु कार्येषु कुटिलगतिमत्ता तदीया सुनिभालनीया । निघण्टुरुपस्थापयति संग्रामार्थकं शब्दम्—'अग्मन्' इति । एतदीयः संग्रामरूपोऽर्थ इङ्गति कुटिलगत्यर्थकताम् । व्यालीढान्तरणे रणे वृजिनगमनं नितान्तमपेक्ष्यते । एवमेव 'अग्र'-शब्दस्योच्च-प्रथम-परिधिरूपार्थो अवधेयाः । उच्चताप्तये सामान्यजनाग्राह्या नतगतिराश्रयणीया भवति । धातोर्गतिमात्रार्थकत्वे सति गमनें=ज्ञाने नूनं प्राथम्येनोच्चता । हिन्दीभाषायाम् √अगरना* अग्रगमनार्थिका, √अगुआना ( < अग्रगू- ) अग्रकरणार्थिका चेति धातुद्वयी लभ्यते । √अग्र्-धातोः प्रतिपादितचरा अर्था बोधनीया ऋत उपसर्गयोजनायाः ।

इदानीमुपसर्गयोजनाद्वारकार्थपरिवर्तनं विवेच्यते । उपसर्गसाहचर्येण धात्वर्थो बलादन्यत्र नीयते[2] मतानुसारेण शब्दविद्विधानाम् । त्रैविध्यं[3] चोपसर्गगतेर्निरूप्यते—१. धातोर्निश्चितार्थबाधः, २. सत्यामप्युपसर्गयोजनायामुपसर्गद्वारकं धातोर्निश्चितार्थानुवर्तनम् । ३. धातोर्निश्चितार्थविशेषणं चेति । यद्यप्यग्रशब्दोल्लेखः समं सप्तोपसर्गैः; तथापि तदर्था भवन्ति पञ्चैव—

क. प्र—प्राग्रम्, प्राग्र्यम्=प्रधानम् । इह प्रोपसर्गो धात्वर्थमनुवर्तते, अग्रशब्दस्य प्रधानरूपार्थत्वात् ।

---

१. अगी गत्य-अत्थ धातु—धातुमञ्जरी ३२ ।

२. उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥

३. धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ॥

ख. सम—समग्रम् = संपूर्णम्। उपसर्गोऽयं धात्वर्थबाधकः। अग्रशब्दस्य समूहार्थकत्वे तूपसर्ग एष विशेषणतां प्रतिपत्स्यते। सम्यक् समूह एव संपूर्णताद्योतक इति।

ग. अव—अवाग्रम् = अवनतम्। अग्रशब्दस्यार्थे उपरीत्यपि। अवोपसर्गयोजनायां तदर्थो वैपरीत्यं पेदे—आनतमिति। आनतं च कुटिलगतिमतिरिच्य न किमपीत्ययं धात्वर्थानुवर्तकः।

घ. वि—व्यग्रम् = व्याकुलम्। विशेषतोऽग्रेऽग्रे धावनं संकेतयति व्याकुलताम्।

ङ. उत्—उदग्रम् = उन्नतम्। उपसर्गोऽयं विशिनष्ट्युपर्यर्थम्।

च. (१) अभि—अभ्यग्रम् = नवीनम् (भट्टि० ६/२८) अग्रशब्दो हि प्रथमार्थकः। यश्च प्रथमतः साम्मुख्यमेति स नावीन्यं भजते। उपसर्गोऽयं धात्वर्थबाधकः।

च. (२) अभि—अभ्यग्रम् = समीपम् (अ० को० ३,१,६७)। अग्रतः सति साम्मुख्ये सामीप्यम्।

छ. प्रति—प्रत्यग्रम् = अभिनवम (प्रत्यग्रं शृणीहि—ऋ. ३,३०, १७)। द्र० अभ्यग्रम्।

वैयाकरणैरुपसर्गार्थाः पार्थक्येन नोरीकृता धातुतः। कस्यचन धातो रूपाणि समीक्ष्य तन्निखिलार्थानां कुतो न युगपज्ज्ञानम् इति जिज्ञासायामुदाह्रियते दीपकः[1]। दीपादिद्युतिः पर्वतस्य तमेव भागं प्रकाशयति यत्र तदीया स्थितिः। पर्वतीया अन्ये कोणा अवतिष्ठन्ते तिमिरावृताः। एवमेवानेकार्थत्वेऽपि धातूनामुपसर्गरूपदीपसहकारेण

---

१. सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे।
विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्गमिवार्थम्॥
(शिशुपाल० १०।१५)

न बोधो यौगपद्येन समेषामभिधेयानाम्। [1]धातूपसर्गार्थस्य बुद्धिस्थत्वादभ्यन्तरीकृतो भेदः पदकाल एव प्राकाश्यमेतीति।



---

१. बुद्धिस्थादभिसंबन्धात् तथा धातूपसर्गयोः।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते॥
क्वचित् संभविनो भेदाः केवलैरभिदर्शिताः।
उपसर्गेण संबन्धे व्यज्यन्ते प्रपरादिना॥
स वाचको विशेषाणां संभवाद् द्योतकोऽपि वा।
शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते॥
स्थादिभिः केवलैर्यच्च गमनादि तु गम्यते।
तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते॥
अप्रयोगेऽधिपर्योश्च यावद् दृष्टं क्रियान्तरम्।
तस्याभिधायको धातुः सह ताभ्यामनर्थकः॥
(वाक्यपदीये २।१८८–१९२)

# ग्रन्थसमालोचनम्

देवताध्याय-संहितोपनिषद्-वंशब्राह्मणानि—सव्याख्यानि; केन्द्रीय-संस्कृतविद्यापीठनिदेशकेन डा० वे० रामचन्द्रशर्मणा सम्पादितानि। तिरुपतिस्थ-केन्द्रीयसंस्कृतविद्यापीठात् प्रकाशितानि; १९६५; मूल्यं द्वादशमुद्राः ।

हर्षस्यायं विषयो यत् सामविधानब्राह्मणादनन्तरं नो चिराद् डा० रामचन्द्र-शर्मणा सामवेदस्येतराणि त्रीणि ब्राह्मणान्येकस्मिन् पुटके सम्पाद्य प्रकाशितानि विपश्चितां मानसं भृशमावर्जयन्ति। सामविधानब्राह्मणस्य समीक्षणमस्यामेव पत्रि-कायां पूर्वमस्माभिर्विहितम्। तत्र सम्पादनकर्मणो ये ये गुणा अस्माभिर्विवेचिताः, ते सर्वे एवास्मिन् ग्रन्थेऽपि भृशं विद्यन्ते। इतः पूर्वं किञ्चन ब्राह्मणं रोमनलिप्यां किञ्चन वङ्गलिप्यां प्रकाशितं समेषां वैदिकपण्डितानामुपकाराय नाभवदिति हेतोर्देव-नागर्यां मुद्रितमिदं सव्याख्यं संस्करणं वैदिकतत्त्वजिज्ञासूनां ध्रुवं कल्याणाय कल्पत इति नूनं वक्तुं पारयामः। त्रयाणामेषां ब्राह्मणानां सायणाचार्यकृतं भाष्यं विद्यत एव, परन्तु संहितोपनिषद्ब्राह्मणस्य द्विजराजभट्टेन निर्मितं भाष्यमप्यत्र संयोजितं सामगानामध्येतॄणां सातिशयमुपकारमावहतीति तदनुशीलनेन नितरां स्पष्टं भवति।

नानाहस्तलेखानामाधारमनुसृत्य विहितमत्र सम्पादनं सम्पादकमहोदयस्य सम्पादनकौशलं सामगायनाभिज्ञतां ग्रन्थविवेचनचातुरीं च नूनं प्रकटीकरोति।

सम्पादकेन प्रतिग्रन्थं समीक्षणात्मिकाष्टिप्पणीर्विलिख्य महानुपकारो विहित-श्छात्राणां पण्डितानां च। टिप्पणीविभागेऽस्मिन् पूर्वैः सम्पादकैर्विहितानां दोषाणां यथोद्घाटनं कृतम्, तथैव व्याख्याकारैरपि निर्दिष्टानामर्थानां त्रुटिनिदर्शनपूर्वकं साधु संशोधनं प्रकटीकृतम्। यथा संहितोपनिषद्ब्राह्मणस्य ८२ पृष्ठे सायणः 'अमित्रहू' इत्यस्य स्थाने 'मित्रहू' इति पाठं स्वीकृत्य तत्पाठसमर्थनाय यत् किञ्चन बहु जगाद तत्तु नातिशोभनम्, प्रकृतसन्दर्भेण साकं विरोधात्। एवमेव ८६ पृष्ठे 'सौष्ठव्यम्' इत्यस्यार्थ-विचारणायां सम्पादकस्य तर्कः समर्थनार्हः प्रतिभाति।

संहितोपनिषद्ब्राह्मणं मूलतो गानविषयकं विद्यते। अत एव तस्मिन् गान-प्रकाराणां तत्तद्गाने जायमानानां विकृतीनां च विवरणं बहुशः समुपलभ्यते।

तद्विषये यदि टिप्पणीनां प्राचुर्यं भवेत् तर्हि जिज्ञासूनां भृशं हितावहं स्यात्। भूमिकायां सम्पादको व्याख्याकाराभ्यां प्रदर्शितानां पाठभेदानां तारतम्यं सुष्ठु विमृष्टवान्। वैशिष्ट्यस्यैतस्य सद्भावाद् नूनमिदं संस्करणमेतेषां सामब्राह्मणानामतीव प्रामाणिकं सातिशयमुपयोगभाजनं च विद्यत इति ध्रुवं कथयितुं पारयामः। सम्पादकप्रवरो डा० वे० रामचन्द्रशर्मा सम्पादनेनानेन संस्कृतज्ञैः साधुवचनैः सत्यमभ्यर्हणीय इत्यत्र नास्ति सन्देहस्य कापि कणिका। अनिबद्धसंस्कृतभूमिकं संस्करणमेतद् आङ्गलभाषाविदां नितान्तमुपकारकं भूत्वापि तद्भाषानभिज्ञानां पण्डितानां न भृशमुपकरिष्यतीति खेदस्थानं नितराम्। आङ्गलभाषानभिज्ञानां संस्कृतपण्डितानां कृते प्रतिग्रन्थं लघ्वक्षरी कापि भूमिका अपेक्ष्यते, येन तत्तद्विषयाणां परिज्ञानं तैः कर्तुं पार्येत। सत्यामपि स्वल्पप्रयाससाध्यायामेतस्यां त्रुटौ सामब्राह्मणानामेतत् संस्करणं भूमिकाप्रस्तावनादिसंवलितं जिज्ञासूनां भृशमुपकाराय कल्पिष्यत इति नूनं विश्वासो मम ॥

श्रीबलदेव-उपाध्यायस्य।

—:():—

विमर्शामृतम् ( ज्योतिस्सिद्धान्त—मन्त्रशास्त्र—वेदान्तशास्त्रीयविषयविमर्श—रूपम् )—श्रीपरिपूर्णप्रकाशानन्दभारतीमहास्वामिना विरचितम्। प्रकाशयितारौ—श्रीवि०वेङ्कटरावः, श्रीपिशिपाटिपिच्चय्यश्च। मूल्यम्—रूप्यकपञ्चकम्। मद्रास सन् १९६५, पृष्ठसंख्या १६५ परिमिता।

पूर्वाश्रमे वैद्यवल्लभश्रीराज्ञीवेङ्कटाचलपतिप्रसादमहाग्निचिदिति नामधेयं बिभ्रद्भिः श्रीपरिपूर्णप्रकाशानन्दभारतीमहास्वामिभिर्विरचितेऽस्मिन् ग्रन्थे षोडश बिन्दवः सन्ति। तद्यथा—१. तिथितत्त्वविमर्शः, २. ऋतुहेतुविमर्शः, ३. भूभ्रमणनिरासमण्डनम्, ४. मनोवैभवविमर्शः, ५. वातप्रक्रियाविमर्शः, ६. आकाशविमर्शः, ७. पूर्णापदार्थः, ८. निन्दापवादः, ९. वैवाहिकांशविमर्शः, १०. उपमितिकरणविमर्शः, ११. गीताभिसन्धिः, १२. षोडशादिदक्षिणोपपत्तिः, १३. वेदगुप्तार्थदीपिका, १४. श्रीकृष्णचरितम्, १५. कालिदासवयोजन्मभूमिविमर्शः, १६. ब्रह्मतत्त्वावबोधविशिष्टसंख्याविशेष्यताविमर्श इति। अमीषां षोडशबिन्दूनां शीर्षकदर्शनेनास्य ग्रन्थस्य प्रतिपाद्यो विषयः स्पष्टीभवति। मुखपृष्ठदर्शनेन ज्ञायते यद्

ज्यौतिषसिद्धान्त-मन्त्रशास्त्र-वेदान्तशास्त्रविषयप्रतिपादकं एष ग्रन्थ इति। एतेषां च विषयाणां वर्तते परस्परापेक्षित्वम्। किन्त्वत्र भूभ्रमणविमर्शः, कालिदासवयोजन्मभूमिविमर्श इत्यादीनां विषयाणां चर्चा तन्त्रशास्त्रवेदान्तदर्शनयोः प्रतिपादनावसरेऽप्रासङ्गिकी प्रतीयते। परिज्ञायते यत् पूर्वाश्रमे वैद्यवल्लभश्रीराज्ञीवेङ्कटाचलपतिमहाग्निचिदिति नाम बिभ्रद्भिः श्रीपरिपूर्णप्रकाशानन्दभारतीमहास्वामिमहानुभावैरायुर्वेदादिविविधविषयप्रतिपादका ये बहवो ग्रन्था विरचिताः, तत्रत्यानां सर्वेषां प्रासङ्गिकानामप्रासङ्गिकानां च विषयाणामस्मिन् ग्रन्थे समावेशो व्यधायि स्वामिचरणैः। अत्र पुङ्खानुपुङ्खतयाऽनुस्यूता केवलं ज्यौतिष-तन्त्रशास्त्र-वेदान्तविषयिणी सामग्री संगृहीता स्याच्चेत् तर्हि ग्रन्थेऽस्मिन् किमपि विशिष्टं गौरवमाहितं स्यात्।

मनोवैभवविमर्शोऽत्र ग्रन्थस्य हृदयमिव विराजते। अत्र विभिन्नेषु प्रकरणेषु योगवेदान्तदर्शनदिशा नैका विषयाः प्रतिपादिताः, श्रीचक्रस्य श्रीविद्यायास्तत्संबद्धानामन्येषां विषयाणां स्वरूपनिरूपणमकारि। श्रीचक्रपूजासङ्केतपदकमिति नाम्ना स्थापितायां सारण्यां श्रीचक्रसंबन्धिनां चतुर्दशविषयाणां समावेशो व्यधायि। एवमेव पूर्णापदार्थनाम्नि प्रकरणे पूर्णापदार्थस्तन्त्रशास्त्रस्योपनिषदां च प्रामाण्येन सविशेषं व्याख्यातः। अन्तिमे ब्रह्मतत्त्वावबोधविशिष्टसंख्याविशेष्यताविमर्शाख्ये प्रकरणे संख्याया नियतसंख्याकवर्णात्मकानां मन्त्राणां च विषये विचार उपस्थापितः। एवमेव संख्याया उत्पत्तिलयप्रक्रिया, चन्द्रकलानां सप्तदशत्वसंपत्तिरित्यादयो विषया गणित-दर्शन-तन्त्रशास्त्राणामाधारेण व्याख्याता इति प्रकरणत्रयमेतदस्य ग्रन्थस्य जीवातुभूतमवश्यमेव पठनीयं मननीयं च विद्यारसिकैर्विद्वद्भिरिति॥

श्रीव्रजवल्लभद्विवेदः।

—:*:—

व्याकरणसाहित्यप्रकाशः। लेखकः—श्रीनारायणशास्त्री काङ्करः, एम्० ए०। मू० १५.००। प्रकाशकः—रामअवतार अजमेरा, अजमेरा बुक कम्पनी, जयपुरम्।

व्याकरणसाहित्यप्रकाशनामको ग्रन्थो मयादितोऽन्तं यावत् पर्यालोचितः। ग्रन्थेऽस्मिन् विभागद्वयमस्ति—(१) व्याकरणविभागः, (२) साहित्यविभागः। प्रथमे विभागेऽस्मिन् प्रायो ग्रन्थप्रस्तोत्रा व्याकरणस्य सर्वेषामङ्गानां सरलसरलतमया पद्धत्या तथा निरूपणं कृतमस्ति, येनाधुना संस्कृतशब्दश्रवणमात्रभीतानां विद्यार्थिनामपि

आञ्जस्येनावबोधो भवेत् । मन्ये, प्रतिदिशमपसर्पन्तं व्याकरणकाठिन्यकलङ्ककर्दमं क्षालयितुमेवायं प्रयत्नः श्रीकाङ्करशास्त्रिणो भवेत् । ग्रन्थस्यास्यावलोकनेन शब्दानुशासन-यशस्तिरोधानध्यानैकपरास्तिमिरततितिरोहिता भगवतो भास्करस्यावलोकनेन घूका इव मूका एव भवेयुः । शब्दानां मूलभूतानां धातूनां भेदप्रभेदप्रदर्शनपुरस्सरं रूपाणि प्रदर्शितानि वाक्ये च प्रयुक्तानि सन्ति । एवमेव कृत्तद्धितादिप्रत्ययानामर्थ-विशेषा निरूपिताः सन्ति । संस्कृतभाषाया अप्रतिमवैशिष्ट्यस्योद्वेजितविद्यार्थिनिवहस्य सन्धिसमासरूपस्यापि निरूपणं तथा सरलया मनोविनोदया परिपाट्या कृतमस्ति; यथा तयोर्ज्ञाने विद्यार्थिनो मनागप्यायासं नासादयन्ति । इत्थं व्याकरणविभागस्य परिशीलनेन हिन्दीभाषां संस्कृतभाषया संस्कृतभाषां हिन्दीभाषयानुवदितुं परां प्रौढिं प्राप्स्यन्ति च्छात्राः ।

अपरस्मिन् साहित्यविभागाख्ये प्रकरणेऽलङ्काराणां लक्षणानि संक्षेपतो गद्ये पद्ये च प्रदर्श्य हिन्दीभाषया समन्वितानि सन्ति । तत्र तत्र प्राचीनानामलङ्कार-लक्षणे सारल्यदृष्ट्या पदानि परिवर्तितानि सन्ति । प्रायोऽलङ्काराणामुदाहरणतया शृङ्गाररसप्रधानानि पद्यान्येव दृष्टिगोचरीभवन्ति स्म, किन्तु लेखकेनात्र देशभक्ति-भृतानि नूतनान्येव निर्मितानीति महद् वैशिष्ट्यमस्ति विभागस्यास्य । एवञ्च साहित्यावबोधनेन साकमेव विद्यार्थिनां राष्ट्रभक्तिरपि समुदयमेष्यतीति नात्र शङ्कापङ्कावकाशः । उत्प्रेक्षाया एकमुदाहरणं विद्यार्थिनां मनोविनोदायात्र प्रदर्श्यते—

वज्रभृत्त्राससंत्रस्तं स्वातन्त्र्यसुखवञ्चितम् ।
स्वाराज्योद्घोषमाधातुं मन्ये गान्धी दिवङ्गतः ॥

एवमनेकान्युदाहरणानि देशभक्तिपूर्णानि लप्स्यन्ते विद्यार्थिबन्धुभिः ।

छन्दसामपि लक्षणान्यलङ्कारवदेव व्याख्यातानि सन्ति । उभयेषामपि लक्षणोदाहरणेषु दृष्टिरियं वर्तते यच्छब्दा लघव एव भवेयुः, येन विद्यार्थिनो घोषणे मनागप्यायासिता न भवेयुः ।

परापादितव्यवहाराक्षमत्वकलङ्कपङ्कप्रक्षालनाय प्रकरणेऽस्मिन् निबन्धपत्र-लेखनप्रार्थनापत्रलेखनादिप्रकारान् प्रदर्श्य संस्कृतभाषायाः परामुपयोगितां प्रदर्शयन् श्रीकाङ्करशास्त्री महाभागश्छात्रान् अतीवोपकृतवानिति तस्मै महानुभावाय भूयो भूयो

धन्यवादं वितरामि तथ्यं ब्रवीमि च यत् पुस्तकस्यास्य पठनेन विद्यार्थिनो बोर्डपरीक्षां विश्वविद्यालयपरीक्षां च समुत्तरन्तः संस्कृतभाषया व्यवहारेऽतीव प्रौढा भवेयुः। अन्ते च पुनः साधुवादं व्याहृत्य विरमामि।

श्रीकालिकाप्रसादशुक्लः।

—:*:—

संस्कृतभाषाविज्ञानम्। चक्रवर्ति-श्रीरामाधीनचतुर्वेदप्रणीतोऽयं ग्रन्थः, चौखम्बाविद्याभवनप्रकाशितः, ११६ पृष्ठात्मकः, मूल्यम्—षड् रूप्यकाणि।

श्रीचतुर्वेदमहाभागेन व्याकरणम्, निरुक्तम्, शिक्षाश्चावलम्ब्य नवीनानुसन्धानात्मिकया पद्धत्या रचितोऽयं ग्रन्थो विदुषां विशेषतश्चान्तेवासिनामुपकारकः स्यादिति प्रतिभाति। अत्र भाषालक्षणम्, भाषाप्रयोजनानि, भाषाशब्देतिवृत्तम्, भाषोत्पत्तिः, भाषोत्पत्तिविषयकाणि मतानि, वाग्विभागः, ध्वनिविमर्शः, अकारस्य प्राधान्यम्, शब्दशक्तिः, भाषाभेदः, भाषाया वर्गीकरणम्, निर्वचनम्, भाषाविकृतिहेतव इत्येते विषया विस्तरेण प्रतिपादिताः।

यद्यपि ग्रन्थकारः प्रायेण सर्वत्र प्राचीनभारतीयमतमेवावलम्ब्य विचारयति, तथाप्यन्तराऽन्तरा अर्वाचीनं भाषाविज्ञानमप्यवलम्बते। अत्र भाषावैज्ञानिकमतानां क्वचित् सुष्ठु खण्डनमप्युपलभ्यते। प्राचीनभारतीयमतविचारे ग्रन्थकारः क्वचिदभिनवं मतं प्रदर्शयति, यस्य पुनः समीक्षणमावश्यकमिति मन्ये। संस्कृतशास्त्रे वाग्विचारः सम्यगास्त इति ग्रन्थकारस्य मतम् ( सोऽयं वाग्विस्तरः, अत्रत्यं वैज्ञानिकं तत्त्वं च संस्कृतशास्त्रेष्वेव समुपलभ्यते, नान्यत्र कुत्रापि—पृ० ४९ )। वस्तुतः कथनमिदं समीचीनमेव।

भाषाविचारसंबद्धाः संस्कृतग्रन्थाः प्रायेण नोपलभ्यन्त इत्यतो ग्रन्थस्यास्य महत्ता सिद्धैव।

ग्रन्थकृतां केचन विशिष्टा विचाराः पाठकमनस्तोषायेह प्रस्तूयन्ते—

१. विज्ञानशब्दस्यार्थः खलु ग्रन्थकृता इत्थमुक्तः—जगति पदार्थानुभवपर्यवसायित्वमेव विज्ञानपदार्थ इति ( पृ० १ )।

२. तथा च तदानीं (पाणिन्यादिकाले) 'भाषा'-इति शब्देन संस्कृतभाषाया एव बोधोऽभवत्, नान्यस्या भाषायाः ( पृ० ८ )।

३. वायुरहिते स्थले शब्द उत्पद्यते, न वेति विचारप्रस्तावे सिद्धान्तितम्—वायुविरहितेऽपि पात्रादौ शब्दाः प्रादुर्भवन्ति, किन्तु श्रुतिगोचरतां न भजन्त इत्यवधेयमत्र ( पृ० ४६ )।

४. 'अकारो वै सर्वा वाक्' इति श्रुतिराह, मतमिदं तर्कत उपपादितं ग्रन्थकृता ( पृ० ५६-५७ )।

५. वैदिकी भाषा दैवी भाषेत्युच्यते स्म; या तु ततः किञ्चिद् भेदमापन्ना व्यावहारिकी भाषा सा मानुषी भाषा ( संस्कृतम् ) इत्युच्यते स्म। अद्य तु द्वयीमपि वयं देवभाषेत्येव वदामः ( पृ० ७२ )।

६. स्वभाव एवैष यूरोपीयानां यत्ते प्रसिद्धं परित्यज्याप्रसिद्धमूलं परिकल्पयितुं भवन्ति सन्नद्धाः ( पृ० ७१ )।

७. 'द्विजातिरिव संस्कृताम्' इति रामायणपद्यगत-संस्कृतामितिपदधिकृत्य उक्तम् – मानुष्या भाषायाः कृते संस्कृतामित्युक्तम्······पश्वादिभाषापेक्षया मानुषी वाक् संस्कृतेत्युच्यते ( पृ० ८२ )। एतेनोक्तरामायणवचनमवलम्ब्य ये द्विजातीनामेव संस्कृतोच्चारणाधिकारं साधयन्ति, शूद्रांश्च संस्कृताध्ययनात् तदुच्चारणाद् वा बहिः कुर्वन्ति, तेऽपि भ्रान्ता एव सिध्यन्ति ( पृ० ८३ )।

८. वैदिकी भाषा तत्सहचरी संस्कृतभाषा च सर्वादिभूता। अस्यां च भाषायां संस्कृतशब्दस्तदैव प्रवृत्तो यदा प्राकृतादिभाषाप्रवाहो बाहुल्येन प्रसृतः ( पृ० ८७ )।

कानिचन ग्रन्थकृतोक्तानि मतानि नास्माभिरभ्युपगम्यन्ते, तथाहि—

१. ७७ तमे पृष्ठे उक्तं यद् गोरेलाजातिः ( पशुविशेषः ) अप्रसिद्धा इति। वस्तुत इयं पशुजातिः प्रसिद्धा एव, अफ्रिकादेशे उपलभ्यन्त इमे गोरिल्ला (Gorilla)–नामानो बृहत्कायाः पशवः।

२. उक्तमत्र—संस्कृतशब्दो हि प्राचीनेषु ग्रन्थेषु वाल्मीकिरामायण एव प्रथमत उपलब्धः ( पृ० ८२ )। तदेतदविचारितरमणीयम्, नाट्यशास्त्रे "द्विविधं हि स्मृतं पाठ्यं संस्कृतं प्राकृतं तथा" ( १४।५ ) इति दर्शनात्। नाट्यशास्त्रमतिप्राचीनो ग्रन्थ इत्यभ्युपेयमेव।

इदं प्रमोदास्पदं यद् ग्रन्थकारोऽन्धश्रद्धया न पूर्वाचार्यमतान्यभ्युपगच्छति, प्रत्युत समीक्षणं कृत्वैव मतानां युक्तायुक्तत्वं निश्चिनोति। अत एवानेन 'कैयटाद्युक्तमुदात्तादिस्वरूपं खलु शिक्षाद्यसंमतम्' इति प्रत्यपादि ( पृ० ३८ )।

गुणभूयिष्ठेऽस्मिन् ग्रन्थे केचन दोषा दृश्यन्ते। समालोचकधर्ममनुसरद्भिरस्माभिस्ते इह समासतः प्रदर्श्यन्ते—

(क) द्वन्द्वसमासस्थले हाइफेन ( - ) चिह्नं परित्यज्य कॉमा ( , ) चिह्नं प्रयुक्तं क्वचित् ( पृ० ७२—संस्कृत, ग्रीक, लैटिनप्रभृतिषु भाषासु )। रीतिरियमसमीचीना। एतादृशे स्थलेऽसमासकरणं श्रेयः, यद्वा कॉमा-चिह्नं परित्यज्य हाइफेन-चिह्नमेव प्रयोज्यम्।

(ख) ७६ तमे पृष्ठे भाषानिर्देशे 'जर्मनी' इति शब्दः प्रयुक्तः। अत्र 'जर्मन' इति शब्द एव प्रयोज्यः।

(ग) आकरस्थलनिर्देशेऽनवधानमपि क्वचिद् दृश्यते। ५ मे पृष्ठे वर्णागम इति श्लोको निरुक्तटिप्पणीगत इत्युक्तम्। अत्र काशिका ( ६।३।१०९ ) खल्वाकरस्थलमिति मन्तव्यम्। श्लोकोऽयं विष्णुधर्मोत्तरे व्याकरणप्रस्तावेऽपि पठ्यते। ऋग्वेदीयमन्त्रनिर्देशे अष्टक-वर्ग-मण्डल-सूक्तानि निर्दिष्टानि ( पृ० ७१, टि० १, २ ), न पुनर्मन्त्रस्य क्रमसंख्या निर्दिष्टा। रीतिरियमसाध्वी; मन्त्रक्रमसंख्याऽवश्यं प्रदेया। ८० तमे पृष्ठे शिवपुराणगताः श्लोका उद्धृताः। एषामाकरस्थलम् १७।४।५, १६।२९-३० इति च निर्दिष्टम्। अयुक्तोऽयं निर्देशः। १।१७।४-५, १।१६।२९-३० इति च निर्देशौ स्याताम्। ९२ तमे पृष्ठे 'आह याज्ञवल्क्यः' इत्युक्त्वा केचन श्लोका उद्धृताः, आकरस्थलं पुनर्न निर्दिष्टम्। मधुसूदनशर्मकृतस्य वर्णसमीक्षाग्रन्थस्य नाम खलु गृहीतमत्र। वस्तुतस्त्वत्रत्याः श्लोका याज्ञवल्क्यशिक्षागताः ( वर्णप्रक० ४८–५२ )। श्लोकोद्धरणे क्रमव्यत्यासोऽस्ति। न ज्ञायते कथं ग्रन्थकारेण शिक्षाग्रन्थो नावलोकितः। उद्धृतः पाठोऽपि न मूलग्रन्थेन सह सर्वथा संवदतीति ज्ञेयम्।

(घ) यत्र ङ्-ञादिपञ्चमवर्णा एव प्रयोज्याः, तत्रानुस्वारप्रयोगोऽपि कृतः, यथा—

वेदांगत्रयेति ( पृ० ४ ), पंचविधमिति ( पृ० ५ ), प्रपंचेति ( पृ० १ ) पंचसु ( पृ० ३५ ) इति । एतादृशेषु शब्देषु ङादिपञ्चमवर्णा एव प्रयोज्याः । शब्दविद्यापरायणे ग्रन्थे ईदृशी अशुद्धिर्न करणीया ।

(ङ) क्वचिद् ग्रन्थविशेषोद्‌धृतं श्रुत्यादिवाक्यमाकरस्थलमदृष्ट्वा उद्‌धृतम्, यथा--अकार एवेत्यादिकं वाक्यम् ( पृ० ३३ )। वाक्यमिदम् ऐतरेयारण्यकस्थम् ( २।३।६ )। पाठस्तु 'अकारो वै सर्वा वाक्' इत्यादिः, न तु 'अकार एवे'त्यादिकः ( यथा ग्रन्थे उद्‌धृतः )। लघुमञ्जूषायामप्युद्धरणशुद्धिर्न वर्तते ।

(च) ग्रन्थेऽस्मिन् सर्वेषामुद्‌धृतवचसामाकरस्थलानि न प्रदत्तानि। संस्करणान्तरे कृते सति दोषोऽयमपाकरणीय इति। तथैव मुद्रणाशुद्धयः काश्चन दृष्टा अस्माभिः, यथा—क्लिन्तु (पृ० ४८; 'किन्तु' इति स्यात् ); शब्दसंस्कारहीन इति स्थले ( पृ० ९१ ) शब्दः संस्कारहीन इति पठनीयम् ।

भाषाशास्त्रमधिकृत्य प्रायेण संस्कृतविद्वांसो न विवेचयन्ति, आशासे यत् चतुर्वेदसदृशा अन्येऽपि केचन संस्कृतज्ञा अस्मिन् मार्गे परिश्रमं कुर्युः, पूर्वाचार्यमनीषां च प्रकटयेयुरिति ॥

डॉ० रामशङ्करभट्टाचार्यः ।



# सम्पादकीयम्

## सुस्वागतम्

उत्तरप्रदेशीयेन प्रशासनेन कुलपतिना महामान्येन राज्यपालमहोदयेन च वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिरूपेण नियुक्तानां डाक्टरसुरेन्द्रनाथशास्त्रि-महोदयानां साभिनन्दनं स्वागतं वाच्यते सारस्वत्या सुषमया। इतः पूर्वमेते हि महानुभावा वाराणसीमण्डलान्तर्गतज्ञानपुरस्थितकाशीनरेशराजकीयमहाविद्यालये संस्कृतविभागाध्यक्षरूपेण सुरभारतीमर्चयन्त आसन्।

एतैर्महानुभावैः प्रयागविश्वविद्यालयतः १९४७ तमे ई० वर्षे संस्कृतसाहित्ये 'डी० फिल्०' इत्युपाधिर्लब्धः। नागपुरविश्वविद्यालयतः पुरातत्त्वेन सह संस्कृत-साहित्ये एम० ए० परीक्षा, कलकत्ताविश्वविद्यालयतः पालिप्राकृतयोर्हिन्दीमैथिली-भाषयोश्च एम० ए० परीक्षा, आगराविश्वविद्यालयत एल० एल० बी० परीक्षा, बनारसराजकीयसंस्कृतमहाविद्यालयतः शाङ्करवेदान्ते शास्त्र्याचार्यपरीक्षे, बंगाल-संस्कृत-असोसियेशनतः काव्यतीर्थपुराणतीर्थपरीक्षे, मद्रासविश्वविद्यालयतश्च एम० एल० परीक्षा उत्तीर्णाः; बंगाल-संस्कृत-असोसियेशनतः पाणिनीयव्याकरण-वेदान्त-उपनिषत्-सांख्य-मीमांसा-स्मृति-ऋग्वेद-पालि-पौरोहित्यदर्शनविषयेषु वैष्णवधर्मशास्त्रे च प्रमाणपत्राण्युपलब्धानि, तत्र तत्र स्वर्णपदकप्रदानादिभिश्च सत्कृताः। एते हि यूरोपयात्रावसरे १९६३ तमे ईशवीये वर्षे लन्दननगरे तत्रत्यया रायल-एशियाटिक-सोसाइटी-संस्थया एफ्० आर० ए० एस० इत्यलङ्करणेन सम्मानिता अभूवन्।

१९३७ तमे ईशवीये वर्षे भवद्भिः प्राड्विवाकत्वमङ्गीकृतम्। ततः १९३९ तः १९४२ पर्यन्तम् इन्दोरराजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्याः, संस्कृतशिक्षाया अधीक्षकाः, संस्कृताध्ययनपुनर्नियोजनसमितेर्मन्त्रिणः, होलकरराजकीयमहाविद्या-लयस्य संस्कृतप्राध्यापका आसन्। ततः १९४२ तः १९५५ पर्यन्तं दिल्लीनगरस्थहिन्दु-महाविद्यालये हिन्दीसंस्कृतभाषयोर्हिन्दुसंस्कृतेश्च विभागाध्यक्षपदमलङ्कृतवन्तः, हिन्दी-संस्कृतविषययोः स्नातकोत्तरानुसन्धाननिर्देशकाश्चासन्। ततः परं भवन्त उत्तर-

प्रदेशीयशिक्षाविभागस्य प्रथमश्रेणीकसेवासु ज्येष्ठे वेतनक्रमे संस्कृतविभागाध्यक्षपदं सुशोभितवन्तः। आगराविश्वविद्यालय-विक्रमविश्वविद्यालय-दिल्लीविश्वविद्यालय-गोरखपुरविश्वविद्यालयानां विभिन्नासु परिषत्सु सदस्यत्वेन भवन्तो विराजन्ते। उत्तरप्रदेशीयप्रशासनेन नियुक्तायाः पुराणकोशसमितेर्भवन्तः संयोजकाः शिक्षा-सम्बन्धिनीनामनेकासां परिषदां सदस्याश्चासन्।

एभिर्महानुभावैः संस्कृते आङ्गलभाषायां च विंशत्यधिका ग्रन्था विरचिताः। साम्प्रतं च "ए क्रिटिकल हिस्ट्री आफ मॉडर्न संस्कृत लिटरेचर १८५७–१९५७" (१८५७–१९५७ ई० मध्यवर्तिनो नवीनसंस्कृतसाहित्यस्य समालोचनात्मक इतिहासः) इत्याख्यो ग्रन्थो लिख्यते।

भवन्तः संस्कृत-पालि-प्राकृत-हिन्दी-मराठी-गुजराती-अंग्रेजी-लैटिन-जर्मन-भाषाणां पारङ्गता विद्वांसः, फ्रेंचभाषामपि च सम्यग् जानन्ति। एतेषां वैदुष्यपूर्णं दिग्दर्शनं समुपलभ्य बहवः प्रतिभाशालिनश्छात्रा विविधेभ्यो विश्वविद्यालयेभ्योऽनेकेषु विषयेषु पीएच० डी० प्रभृतीन् उपाधीन् अधिजग्मुः। केचनाधुनापि विविधेषु विषयेषु तत्तदुपाधिलाभाय बद्धपरिकरा दृश्यन्ते।

संस्कृतशिक्षाजगति प्रथिततमेऽस्मिन् वाराणसेयसंस्कृतविश्वविद्यालये सुर-भारतीसमाराधने गृहीतदीक्षाः प्रथितयशसो विद्वांस एवोपकुलपतिपदे नियुज्येरन्निति परिपाटी परिपालनीयेत्युत्तरप्रदेशीयस्य प्रशासनस्य निश्चयः शास्त्रिमहोदयानामुपकुल-पतिपदे नियुक्त्याऽनया दृढं व्यक्तो भवति। संस्कृतसाहित्ये, दर्शने, इतिहासादिषु च कृतभूरिपरिश्रमाणां शास्त्रिमहोदयानामुपकुलपतित्वकाले विश्वविद्यालय एष विद्या-क्षेत्रेष्वपि गवेषणादिविधिषु नितान्तं गौरवास्पदं स्थानमधिगन्तेति सुदृढोऽस्माकं विश्वासः। प्राचीनया परिपाट्याऽत्राध्ययनाध्यापनयोर्वर्तमाना प्रणाली नूतनया गवेषणात्मिकया समालोचनात्मिकया च परिपाट्या मिलिता महते गौरवाय कल्पेत। सरस्वतीभवनपुस्तकालये लक्षाधिकानां प्राचीनानां हस्तलिखितग्रन्थानां महान् संग्रहो विद्यते। सर्वेषामेषां सम्यक्तया परिज्ञानाय सूचीनिर्माणादिकं मुद्रितामुद्रितविवेक-पुरस्सरं मुद्रणार्हाणां दुर्लभग्रन्थानां सम्पादनमुद्रणप्रकाशनादिव्यवस्थाकरणं चेत्यादिकं चिरप्रतीक्षितं कार्यजातं स्वकीयामचिरभाविनीं सम्पन्नतामभिलषति। शास्त्रिमहोदया

उपेक्षितप्रायाणां विद्यासंवन्धिनीनामत्रत्यानां समस्यानां समाधानाय सावधानं बद्धादरा भविष्यन्तीति तेषां कार्यकालो विश्वविद्यालयस्य यशसे श्रियै कल्याणाय च कल्पेतेति भगवान् भूतभावनो विश्वेश्वरः प्रार्थ्यते ॥

## संस्कृतविश्वपरिषदोऽष्टममधिवेशनम्

मईमासस्य २७-२८-२९ दिनाङ्केषु बंगलोरनगरे संस्कृतविश्वपरिषदोऽष्टममधिवेशनं श्रीमतां महामान्यानां डाक्टरसर्वपल्लीराधाकृष्णन्महोदयानामाध्यक्ष्ये संपन्नम्। विगते वर्षे सितम्बरमासे आयोजितमिदमधिवेशनं भारते पाकिस्तानकृतेनाक्रमणेन हेतुना स्थगितमासीत्।

२७ दिनाङ्के सायं ५-३० वादनसमये सुप्रसिद्धे सुन्दरे च राजकीये लालवागनामक उपवनेऽधिवेशनस्य कार्यारम्भः संजातः। मैसूरमुख्यमन्त्रिणां स्वागतभाषणमनु मैसूरराज्यपालश्रीगिरिमहोदयानाम् आन्ध्रराज्यपालश्रीपट्टणथानुपिल्लैमहोदयानां चाभिभाषणे संवृत्ते। परिषदः कार्याध्यक्षैः श्रीक०मा० मुंशीमहोदयैः प्रार्थिता महामान्या राष्ट्रपतिमहोदया उद्घाटनभाषणमकुर्वन्। तत्रोक्तं तैः—

"अस्यां परिषदि मम स्थानं न राष्ट्रपतित्वेन ग्राह्यम्। संस्कृतस्य महत्त्वं जानन्नेवाहमत्रोपस्थितोऽस्मि। मानवजीवनस्य समुचितव्याख्याज्ञानाय तथा तस्य मूल्यनिर्धारणाय संस्कृताध्ययनं देशे परमावश्यकम्। संस्कृतसाहित्यं चिरप्राचीनं सदपि चिरनवीनं विद्यते। भारते सर्वासां संस्कृतीनामुत्तमांशः श्रेष्ठः सारः संस्कृतद्वारैवात्मसात्कृतो विद्यते। अत्र म्लेच्छा अपि ऋषिवत् पूज्या अभवन्, यदि तैः सत्यं किमपि तत्त्वं प्रतिपादितम्। संस्कृतस्य प्रसारेणैव भारतं प्रभावि तिष्ठेदिति मे दृढो विश्वासः" इति।

द्वितीये दिवसे (२८-५-६६) प्रातः संस्कृतविश्वपरिषदः कार्यकारिसमितेरधिवेशनं संपन्नम्, समागतैः प्रतिनिधिभिर्निबन्धानां कवितानां पाठो विचारविनिमयश्च विहितः। अपराह्णवेलायां संस्कृतभाषासमस्या अन्यांश्च विषयानवलम्ब्य प्रस्तावाः पुरस्कृताः समर्थिताः पारिताश्च।

तृतीये दिवसे (२९-५-६६) प्रातः प्रतिनिधीनां भाषणानि तेषु तेषु प्रदेशेषु संस्कृतविषयिणीं प्रगतिमुद्दिश्य संपन्नानि। एकादशवादनवेलायां च मुंशीमहोदयाना-

माध्यक्ष्ये संस्कृतपत्रकारपरिषदोऽस्मिन्नेवाधिवेशने विशेषतः समायोजितायाः संमेलनमभवत् । श्रीर०र०दिवाकरमहोदयैः साकं कतिपयपत्रकाराणामुपसमितिरेका स्थापिता, संस्कृतपत्रपत्रिकाभ्यः समुचितं साहाय्यं संरक्षणं चोपलब्धुम्। ततोऽपराह्णे प्रस्तावादिकं विविधेषु विषयेषु शास्त्रार्थश्चाभवत् ।

१९५१ तमे ईशवीये वर्षे पावने सोमनाथक्षेत्रे संस्कृतविश्वपरिषदः स्थापना समजनि । ततः प्रभृति श्रीमतां क० मा० मुंशीमहोदयानां समुद्यमेन संस्कृतभाषायाः संस्कृतसेविनां च कल्याणाय योग्यं पदक्रमं विदधती सेयं संस्कृतविश्वपरिषदनवरतं सुस्थिरसंकल्पा प्रवर्तते । इदमेवास्याः परिषदो वैशिष्ट्यं यदत्र प्राचीनामध्ययनप्रणालीमनुसरन्तः पण्डिताः, नूतनामालोचनात्मिकां सरणिं क्षुन्दन्तः प्राध्यापकाः, संस्कृतप्रियाः शासकाश्च समवेत्य देववाण्याः समुन्नत्यर्थं प्रयतन्ते । मुंशीमहोदयानां समुद्यमेनास्या अधिवेशनेषु केन्द्रीयप्रशासनाधिकारिणस्तत्तत्प्रान्तीयशासनाधिकारिणश्च विशेषतो दत्तावधाना भवन्ति । फलतः संस्कृतविषयिणी का नाम मान्यता वर्तते भविष्यति वा शासनस्येति तत्र स्फुटं प्रतीयेत । केन्द्रीयप्रशासनेन निर्धारिते त्रिभाषासूत्रे संस्कृतभाषायै न कोऽप्यादरः प्रदर्शितः । केन्द्रीयप्रशासनेन स्थापितस्य शिक्षायोगस्याधुना प्रकाशिते बृहत्काये प्रतिवेदनेऽपि भारतीयशिक्षाक्षेत्रे संस्कृतभाषाया बहिष्कार एवाचरितः । अत्र विषये परिषदा दत्तावधानया भाव्यम् । केन्द्रीयशिक्षामन्त्रिणः श्रीछागलामहोदयाः संस्कृतभाषाया महिमानं गायन्तो न तृप्यन्ति । एवं सत्यपि नैव त्रिभाषासूत्रे नापि च शिक्षायोगस्य प्रतिवेदने संस्कृतं योग्यं स्थानमलभतेति चिन्तनीयेयमवस्था । प्रवर्तमानया केन्द्रीयप्रशासनस्य शिक्षणनीत्या संस्कृतभाषाया लोपप्रसङ्ग एव प्राप्तः । भयावहेयमवस्था सत्वरमेवापाकरणीया । अत्र संस्कृतविश्वपरिषदेव विशेषतः प्रभवति । सुस्पष्टया सुदृढया च भाषया प्रस्तावोपस्थानेनैव न किमपि सेत्स्यति, किन्तु त्रिभाषासूत्रे संस्कृतभाषाया अन्तर्भावः स्वतन्त्ररूपेण, विदेशीयभाषया राष्ट्रभाषया प्रदेशीयभाषया सह वा नूनं यथा स्यात्तथा भागीरथेन प्रयत्नेन भाव्यम् । भारतीयशिक्षाविधौ संस्कृतभाषायाः समावेशोऽपरिहार्यरूपेण स्यादिति महामान्यानां राष्ट्रपतीनामप्यभिप्रायः प्रतीयते । नातिविलम्बमस्याभिप्रायस्य पूर्तावेव परिषदा सर्वाः स्वकीया इतिकर्तव्यता यदि विनियोज्यन्ते, तदैव तया सदृशं कृतं स्यात् ॥

## स्वर्गीया गिरिधरशर्मचतुर्वेदमहोदयाः !

वाराणसेयसंस्कृतविश्वविद्यालयस्य सम्मानितप्राध्यापका म०म०पण्डित-गिरिधरशर्मचतुर्वेदमहोदया आषाढकृष्णसप्तम्यां शुक्रवासरे ( १०–६–१९६६ ) षडशीतिवर्षे वयसि वैकुण्ठवासमलभन्तेति निवेदयतामस्माकं नितान्तं चेखिद्यते चेतः । २–२–६६ दिनाङ्के वाराणसेया विद्वांसः श्रीमतां चतुर्वेदमहोदयानां ८५ तमं वर्धापनदिवसं सोत्साहमायोजितवन्तः । तदा को नाम जानाति स्म दैवदुर्विलसितमेतत् ।

व्याख्यानवाचस्पतयश्चतुर्वेदमहोदया वेदानां धर्मशास्त्राणां दर्शनानां संस्कृत-साहित्यस्य भारतीयसंस्कृतेश्च सम्यग् व्याख्यातारः परमविद्वांसश्चासन् । एते हि पञ्जाबराजकीयसंस्कृतमहाविद्यालयस्य, जयपुरनगरस्थ-महाराजसंस्कृतमहाविद्यालयस्य चाध्यक्षा आसन् । ततोऽवकाशं लब्ध्वा भवन्तः काशीवासधिया वाराणसीमागच्छन् । हिन्दूविश्वविद्यालयाधिकारिणामनुरोधेन च तत्र संस्कृतमहाविद्यालयेऽनुसन्धान-निर्देशकत्वमङ्गीकृतवन्तः । एतेषां महानुभावानां वैदुषी विदेशीयेन प्रशासनेन महामहोपाध्यायपदवीप्रदानेन राष्ट्रियेण शासनेन च संस्कृतविदुषो राष्ट्रपतिप्रदत्तेन संमाननेन समानं सत्कृता । १९६२ ईशवीये वर्षे 'साहित्य-अकादमी'-संस्थया भवदीयः 'वैदिक-विज्ञान तथा भारतीयसंस्कृति' इत्याख्यो ग्रन्थः पञ्चसहस्रमुद्राणां पारितोषिकेण पुरस्कृतः । संस्कृतविश्वविद्यालयस्थापनानुकालं भवन्तस्तत्रत्यैरधि-कारिभिराजीवनं सम्मानितप्राध्यापकरूपेण प्रतिष्ठापिताः ।

श्रद्धास्पदैश्चतुर्वेदमहोदयैः संस्कृतभाषायां हिन्दीभाषायां च विंशत्यधिका ग्रन्था विरचिताः संपादिताश्च, परश्शतं निबन्धाश्च निबद्धाः । शाङ्करभाष्यतो गीता-रहस्यपर्यन्तं विंशत्यधिका व्याख्याः परिशील्य भवद्भिर्गीताप्रवचनं विरचितम् । प्रमेयपारिजाते भवद्भिर्भारतीयानामास्तिकनास्तिकानां द्वादशदर्शनानामात्मसंबन्धी विचारः समीक्षितः । पञ्चसु खण्डेषु पुराणपारिजातनाम्ना पुराणपरिशीलनं कृतम् । वाराणसेयसंस्कृतविश्वविद्यालयस्य गङ्गानाथझाप्रवचनमालायाः प्रथमपुष्पत्वेन प्रका-शिते 'वेदविज्ञानविन्दुः' इत्याख्ये ग्रन्थे स्वर्गीयैर्जयपुरनगरवास्तव्यैः स्वकीयैर्गुरुभिः श्रीमधुसूदन-ओझामहोदयैः प्रवर्तितस्य वेदविज्ञानविषयस्य महत्त्वपूर्णा विषया विवेचिताः ।

संस्कृतविदुषां सर्वप्रथमाऽखिलभारतीया संस्था संस्कृतसम्मेलनं तस्य मुखपत्रं संस्कृतरत्नाकरश्च भवतैव महताऽऽयासेन स्थापिते प्रवर्धिते चेत्याधुनिकं सम्पूर्णं संस्कृतजगच्चतुर्वेदमहोदयस्याधमर्णतां विभर्ति। जीवनसन्ध्याया अन्तिमेषु द्वित्रेषु वर्षेषु यद्यपि चतुर्वेदमहोदया वृद्धावस्थाप्रयुक्तेन शारीरेण व्याधिना ग्रस्ता आसन्, तथापि तेषां मानसिकी आध्यात्मिकी चावस्थोत्तरोत्तरं विशिष्टां पुष्टिं प्रतिपेदे। तया च पुष्ट्या परिपुष्टाः परश्शतं जिज्ञासवः शिष्याश्चान्तिमेषु दिवसेष्वपि कामपि तुष्टिमलभन्त।

भौतिकेन स्वरूपेण ब्रह्मणि विलीना अपि चतुर्वेदमहोदयाः स्वकीयेन यशश्शरीरेणात्र चिरं स्थास्यन्ति; ग्रन्थेषु निबन्धेषु च विद्यमानास्तेषामुपदेशा अस्मान् सत्पथे प्रेरयिष्यन्ति। दैवदुर्विपाकात् समागतेऽस्मिन् दारुणे प्रसङ्गे वैकुण्ठधामा भगवान् जनार्दनः स्मर्यते, श्रद्धावनतैरयं वाक्प्रसूनाञ्जलिश्च चरणयोस्तेषां समर्प्यते॥



# वाराणसेयसंस्कृतविश्वविद्यालयेन प्रकाशिता ग्रन्थाः

## सरस्वतीभवन-ग्रन्थमालायाम्

७. योगिनीहृदयम् (तन्त्रम्) अमृतानन्दनाथविरचितया दीपिकया भास्करराय-विरचितेन सेतुबन्धेन च सहितम् । (द्वितीयं संस्करणम्) । — १०.००

१५. त्रिपुरारहस्यम् (तन्त्रम्) (ज्ञानखण्डः) श्रीनिवासभट्टविरचितया तात्पर्य-दीपिकाव्याख्यया सहितम् । (द्वितीयं संस्करणम्) । — ९.००

३१. तन्त्ररत्नम् (मीमांसा) (तृतीयो भागः) पार्थसारथिमिश्रविरचितम् । श्री टी० रामचन्द्रदीक्षितेन सम्पादितम् । — ५.५०

४६. काव्यप्रकाशदीपिका (द्वितीयो भागः) चण्डीदासविरचिता । श्रीशिव-प्रसादभट्टाचार्येण संपादिता । — १.५०

४६. काव्यप्रकाशदीपिका (तृतीयो भागः) चण्डीदासविरचिता । श्रीशिव-प्रसादभट्टाचार्येण संपादिता । — १०.००

८६. गर्गसंहिता (प्रथमो भागः) श्रीविभूतिभूषणभट्टाचार्येण सम्पादिता । — १०.००

८७. बृहच्छब्देन्दुशेखरः (व्याकरणम्) नागेशभट्टविरचितः (१-३ भागाः) । डॉ० सीतारामशास्त्रिणा सम्पादितः । — ४५.००

८८. पदवाक्यरत्नाकरः (व्याकरणम्) गोकुलनाथोपाध्यायविरचितः, यदुनाथ-मिश्रविरचितटीकया सहितः । पण्डितनन्दिनाथमिश्रेण सम्पादितः । — १५.००

८९. काव्यप्रकाशविवरणम् (अलङ्कारः) गोकुलनाथोपाध्यायविरचितम् । कविशेखरबदरीनाथझासम्पादितम् । — ८.००

९०. तारिणीपारिजातः (तन्त्रम्) विद्वदुपाध्यायविरचितः । पण्डितरमानाथझा-शर्मणा सम्पादितः । — ४.००

९१. वाक्यपदीयं ब्रह्मकाण्डम् (व्याकरणम्) भर्तृहरिप्रणीतं स्वोपज्ञवृत्तियुतम् । श्रीरघुनाथशर्मणा विरचितया अम्बाकर्त्रीव्याख्यया संवलितम् । — १०.००

९२. सूक्तिमुक्तावली (गद्यकाव्यम्) गोकुलनाथोपाध्यायविरचिता । पण्डित-भूपनारायणझाशर्मणा सम्पादिता । — ५.५०

९३. नयरत्नमाला (नव्यन्यायः) श्रीशास्तृशर्मणा विरचिता । — ६.५०

९४. भगवद्गीताभाष्यम्—भट्टभास्करविरचितम् । डा० सुभद्रझाशर्मणा सम्पादितम् । — ५-५०

९५. पारसीकप्रकाशः (कोशः) विहारिमिश्रविरचितः । श्रीविभूतिभूषणभट्टाचार्येण सम्पादितः । ५.५०

## मुद्रणालयस्था ग्रन्थाः

१. हयत (सिद्धान्तज्यौतिषम्) ।

२. वाक्यपदीयं द्वितीयं काण्डम् (व्याकरणम्), यावदुपलब्धभर्तृहरिप्रणीतस्वोपज्ञवृत्त्या, पुण्यराजकृतटीकया, श्रीरघुनाथशर्मविरचित-अम्बाकर्त्रीव्याख्यया च सहितम् ।

३. तन्त्ररत्नम् ( मीमांसा ) ( चतुर्थो भागः ) पार्थसारथिमिश्रविरचितम् । श्री टी० रामचन्द्रदीक्षितेन सम्पादितम् ।

४. भक्तिचन्द्रिका—शाण्डिल्यभक्तिसूत्रटीका । नारायणतीर्थविरचिता (द्वितीयं संस्करणम्)

५. नित्याषोडशिकार्णवः—शिवानन्दविरचितया ऋजुविमर्शिन्या, विद्यानन्दविरचितयाऽर्थरत्नावल्या टीकया सहितः ।

# सरस्वतीभवन-निबन्धमालायाम्

१२. व्याकरणदर्शनपीठिका—श्रीरामाज्ञापाण्डेयेन विरचिता । ४.००

१३. ग्रहगणितमीमांसा—डा० मुरारिलालशर्मणा विरचिता । ५.५०

१४. पाणिनीयधातुपाठसमीक्षा—डा० भागीरथप्रसादशर्मणा विरचिता । १८.५०

१५. प्रक्रियाकौमुदीविमर्शः—डा० आद्याप्रसादमिश्रेण विरचितः । ८.००

## मुद्रणालयस्थाः

१. व्याकरणदर्शनप्रतिमा—श्रीरामाज्ञापाण्डेयेन विरचिता ।

२. सूर्यग्रहणम्—डॉ० कृष्णचन्द्रद्विवेदिना विरचितम् ।

३. अथर्ववेदे शान्तिपुष्टिकर्माणि—डॉ० मायामालवीयविरचितम् ।

# लघुग्रन्थमालायाम्

९. गैरिकसूत्राणि सवृत्तिकानि जव्यु पनामकगङ्गारामोन्नीतानि, श्रीरघुनाथशर्मविरचितविवरणसमेतानि । श्रीव्रजवल्लभद्विवेदेन प्रस्तावनापाठभेदादिभिः संयोज्य संपादितानि । १.००

१०. अष्टादशपुराणव्यवस्था—काशीनाथभट्टविरचिता । मुरलीधरमिश्रेण व्याकरणविभागाध्यक्षेण संपादिता । १.००

११. भङ्गीविभङ्गीकरणम् (ज्यौतिषम्) श्रीरङ्गनाथभट्टविरचितम् । संपादकः—श्रीमीठालाल ओझा, ज्यौतिषाचार्यः । २.००

१२. प्रमाणविनोदः (नव्यन्यायः) श्रीचित्रधरमिश्रविरचितः । श्रीढुण्ढिराजशास्त्रिणा संपादितः । १.५०

१३. गलितप्रदीपः (वेदः) लक्ष्मीधरसूरिविरचितः । श्रीश्रीकृष्णदेवशर्मणा ऋग्वेदाचार्येण संपादितः । २.००

१४. पलभागखण्डनम् (ज्यौतिषम्) दैवज्ञरङ्गनाथभट्टविरचितम् । सम्पादकः—श्रीमीठालाल ओझा, ज्यौतिषाचार्यः । ४.००

१५. लोहगोलखण्डनं रङ्गनाथदैवज्ञविरचितम्, तथा लोहगोलसमर्थनं गदाधरदैवज्ञविरचितम् (ज्यौतिषम्) । सम्पादकः—श्रीमीठालाल ओझा, ज्यौतिषाचार्यः । २.००

१६. कोविदानन्दः (व्याकरणम्) आशाधरभट्टविरचितः । श्रीकालिकाप्रसादशुक्लेन संपादितः । १.५०

१७. सिंहलताजिकोक्ताः षोडशयोगाः, नृसिंहदैवज्ञविरचितः प्रश्नसारश्च । सम्पादकः—श्रीमीठालाल ओझा, ज्यौतिषाचार्यः । २.००

## हस्तलिखितग्रन्थानां विवरणात्मिका सूची

| | |
|---|---|
| प्रथमः खण्डः, प्रथमो भागः (वेदः) | ३.२५ |
| प्रथमः खण्डः, द्वितीयो भागः (उपनिषद्) | २.०६ |
| द्वितीयः खण्डः, प्रथमो भागः (कर्मकाण्डम्) | २.५० |
| द्वितीयः खण्डः, द्वितीयो भागः (कर्मकाण्डम्) | २.०० |
| तृतीयः खण्डः (धर्मशास्त्रम्) | ४.३१ |
| चतुर्थः खण्डः (पुराणेतिहासो गीता च) | ६.२५ |
| पञ्चमः खण्डः, प्रथमो भागः (स्तोत्रम्) | ७.२५ |
| पञ्चमः खण्डः, द्वितीयो भागः (स्तोत्रम्) | ७.२५ |
| षष्ठः खण्डः (तन्त्रम्) | ६.०० |
| सप्तमः खण्डः (पूर्वोत्तरमीमांसे सांख्ययोगौ च) | ७.०० |
| अष्टमः खण्डः (न्यायवैशेषिकम्) | ८.५० |
| नवमः खण्डः (ज्यौतिषम्) | ७.५० |
| दशमः खण्डः (व्याकरणम्) | ६.०० |
| एकादशः खण्डः (साहित्यम्) | ८.५० |
| द्वादशः खण्डः (जैन–भक्ति–सम्प्रदाय–आयुर्वेद–कामशास्त्र–शिल्पकला–संगीत–नीति–धनुर्वेद–पञ्जी–प्रशस्ति–चित्र–देशीभाषासंग्रहात्मकः) | ८.०० |

## गङ्गानाथझा-ग्रन्थमालायाम्

१. न्यायकन्दली (वैशेषिकदर्शनम्) भट्टश्रीधरविरचिता प्रशस्तपादभाष्यटीका, प्रशस्त-पादभाष्येण सहिता । श्रीदुर्गाधरझाशर्मणा हिन्दीभाषानुवादेन सह सम्पादिता । २५.००

२. न्यायसिद्धाञ्जनम् (विशिष्टाद्वैतम्) वेदान्तदेशिकविरचितम् । श्रीनीलमेघाचार्येण हिन्दीभाषयानूद्य सम्पादितम् । २५.००

## गङ्गानाथझा-प्रवचनमालायाम्

१. वेदविज्ञानविन्दुः (वेदः) म० म० पण्डितगिरिधरशर्मचतुर्वेदविरचितः । १.००

२. बौद्धदर्शनविन्दुः (बौद्धदर्शनम्) डॉ० सातकडिमुखोपाध्यायविरचितः । १.००

३. शैवदर्शनसंग्रहः (शैवदर्शनम्) डॉ० कान्तिचन्द्रपाण्डेयविरचितः । २.००

४. अद्वैतवेदान्तविन्दुः—म० म० अनन्तकृष्णशास्त्रिविरचितः । २.००

५. न्यायदर्शनविन्दुः—म० म० कालीपदतर्काचार्यविरचितः । २.००

## सम्पूर्णानन्द-ग्रन्थमालायाम्

१. दृक्सिद्धपञ्चाङ्गनिर्माणपद्धतिः (ज्यौतिषम्) श्रीगणपतिदेवशास्त्रिणा विरचिता, तेनैव संपादिता च । ६.००

२. पाश्चात्त्यं नीतिशास्त्रम्—श्रीविश्वेश्वरसिद्धान्तशिरोमणिना विरचितम् । ४.००

३. अर्वाचीनं मनोविज्ञानम्—श्रीमामराजदत्तकपिलेन विरचितम् । १२.००

४. अर्वाचीनं ज्योतिर्विज्ञानम्—श्रीरमानाथसहायेन विरचितम् । १३.००

५. ज्योतिर्विज्ञानम्—श्रीधूलिपालसोमयाजिना विरचितम् । ९.००

६. अभिनवमनोविज्ञानम्—श्रीप्रभुनाथ-अग्निहोत्रिणा विरचितम् । ९.००

७. भारतस्य सांस्कृतिको दिग्विजयः—श्रीहरिदत्तवेदालङ्कारेण विरचितः । यन्त्रस्थः

## गोपीनाथकविराज-ग्रन्थमालायाम्

१. संस्कारदीपकः (धर्मशास्त्रम्) हर्षनाथझाविरचितः । श्रीदुर्गाधरझाशर्मणा संपादितः । ७.००

२. बृहत्संहिता ( ज्यौतिषम् ) वराहमिहिराचार्यविरचिता, भट्टोत्पलकृतया टीकया सहिता । यन्त्रस्था

## वल्लभवेदान्त-ग्रन्थमालायाम्

१. शुद्धाद्वैतमार्तण्डः—गिरिधरजीमहाराजविरचितः, श्रीरामकृष्णभट्टप्रणीतया प्रकाशाख्य-व्याख्यया सहितः; प्रमेयरत्नार्णवः—श्रीबालकृष्णभट्टविरचितः; हरिरायविरचितो ब्रह्म-वादश्च । श्रीसत्यनारायणमिश्रेण वेदान्ताचार्येण सम्पादितः ।

## पालि-ग्रन्थमालायाम्

१. अभिधम्मत्थसंगहो—अनिरुद्धाचार्यविरचितः । यन्त्रस्थः

२. जातकट्ठकथा (प्रथमो भागः)—बुद्धघोषाचार्यविरचिता । यन्त्रस्था

३. विशुद्धिमग्गो—बुद्धघोषाचार्यविरचितः । यन्त्रस्थः



## रजिस्टर्ड न्यूज पेपर्स एक्ट के नियम के अन्तर्गत

## विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी । |
| ४. प्रकाशक का नाम | श्री बलदेव उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ५. सम्पादक का नाम | श्री बलदेव उपाध्याय, |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |

मैं श्री बलदेव उपाध्याय घोषित करता हूँ कि उपरिलिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है ।

श्री बलदेव उपाध्याय
हस्ताक्षर

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चो-द्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां मौलिकविचार-पूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः ।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचनाः प्रकाश्यन्ते ।

७. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते ।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी–२" इति सङ्केतेन विधेयः ।

———

प्रकाशक—संचालक अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी ।
मुद्रक—श्री घनश्याम उपाध्याय, वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी ।